मूसालिखितः

आदिग्रन्थः

यात्रापुस्तकस्य प्रथमभागश्च।

---

THE BOOK

OF

# GENESIS

AND

# PART OF EXODUS

IN SANSCRIT.

---

TRANSLATED FROM THE HEBREW

BY

The Calcutta Baptist Missionaries.

---

CALCUTTA:

PRINTED FOR THE BIBLE TRANSLATION SOCIETY, AT

THE BAPTIST MISSION PRESS.

1843.

# यात्रापुस्तकम्।

## अर्थात्।

## मूसालिखितं द्वितीयपुस्तकम्।

### १ प्रथमोऽध्यायः।

१ यूषफस्तस्य भ्रातृणाञ्च मरणात् परं तेषां वंशवृद्धिः ८ फिरौणा तेषामुपद्रवः १५ तेषु धात्रीणां दया। २१ तेषां पुत्राणां वधश्च।

रूवेन् शिमियोन् लेवि यिहूदा इषाखर् सिबूलून् १
बिन्यामीन् दान् नप्ताली गाद् आशेर् एतन्नामका २
इस्रायेलः सन्तानाः सर्व्वे स्वस्वापत्यान्यादाय याकूबा ३
सार्द्धं मिसर्देशम् आजग्मुः। याकूबोऽपत्यानि साकल्येन ४
सप्ततिजना आसन्, किन्तु यूषफ् पुरैव मिसरि
स्थितवान्। अनन्तरं यूषफ् तस्य भ्रातरस्तत्कालीन- ५
लोकाश्च मम्रुः। तथापि इस्रायेलो वंशो बहुप्रजो ६
वर्द्धिष्णु र्बहुसन्तानः सन्ततोबलवत्तरो अभवत्; देश ७
स्तैः परिपूर्णो बभूव।

ततःपरं यूषफं यो न जानाति, तादृश एको मिसरि ८
नवीनो राजा भूत्वा निजलोकेभ्यः कथयामास, पश्यत,
इस्रायेलीयलोका बलेन संख्यया च अस्मत्तोऽधिका ९

१० अभवन्। यथा ते पुन र्वर्द्धिष्णवो न भवेयुः; अपरं युद्ध
उपस्थिते अस्माकं शत्रुपक्षाः सन्तोऽस्माभिः सार्द्धं न
युद्ध्येयुः, अस्मात् देशाच्च न गच्छेयुः, तन्निमित्तं वयं तैः
११ सार्द्धं सावधाना व्यवहराम। अनन्तरं ते भारवाहनेन
तान् क्लेष्टुं तेषामुपरि कार्य्यशासकान् नियोजयामासुः;
अपरं तैः फिरौणः कृते भाण्डागारनगरम् अर्थात्
१२ पिथोमं रामिषेषञ्च निर्मापयामासुः। किन्तु ते तै
र्यावतः क्लेशान् लेभिरे, तावत् वृद्धिम् उन्नतिञ्च गन्तुम्
आरेभिरे; तस्मात् ते इस्रायेलो वंशकारणात् भती-
१३ वोद्विविजुः। पश्चात् मिस्रीयलोका निर्द्दयत्वेन तान्
१४ दास्यकर्म्माणि कारयामासुः। फलतः कठोरदास्येन
पङ्केष्टकलेपकर्म्मभिश्च तेषां प्राणान् विरञ्जयाञ्च
क्रुः; एतैः सेवनैरतिनिर्द्दयत्वेन तान् दास्यकर्म्माणि
कारयामासुः।

१५ अनन्तरं मिस्रीयो भूपतिरिब्रीयलोकानां शिफ्रा-
नामिकां पूयानामिकाञ्च धात्र्यावाहूय वचनमिदं
१६ बभाषे, यदा युवाम् इब्रीययोर्योषितां धात्रीकार्य्यं करि-
ष्यथः तदा तासाम् अपत्यानां कोषौ परीक्षिष्येथे,
तत्र यदि तासां पुत्रापत्यानि भवन्ति, तर्हि तानि हनि-
ष्येथे, यदि च स्त्र्यपत्यानि जायन्ते, तर्हि तानि जीवन्ति

स्थापयिष्येथे। किन्तु धात्र्यौ ईश्वरात् भीत्वा मिस्रीय- १७
राजस्य निदेशानुसारात् अकृत्वा पुमपत्यानि जीवन्ति
स्थापयितुम् आरेभाते। अतो मिसरो राजा धात्र्यौ १८
आहूय बभाषे, युवां एतादृशं कर्म्म कुतः कुरुथः? पुम-
पत्यानि कुतो जीवन्ति स्थापयथः? ततो धात्र्यौ फिरौणं १९
प्रति जगदतुः, इब्रीयाणां योषितो मिस्रीयाणां योषित
इव न भवन्ति; ता बलवत्यः धात्रीणां तासां समीपा-
गमनात् पूर्व्वं ताः प्रसूयन्ते। अत ईश्वरस्तयोः धात्र्योः २०
कुशलं चकार, ततो लोका अतीवायमेधमाना महा-
बलवन्तो बभूवुः। धात्र्यौ ईश्वरात् बिभयाञ्चक्रतुः, २१
तस्मात् स तयोरपि वंशान् एधयाञ्चकार।

अनन्तरं फिरौण् निजान् सर्व्वलोकान् इत्याज्ञा- २२
पयामास, यूयं सर्व्वाणि सद्योजातानि पुमपत्यानि
स्रोतस्विन्यां निक्षेप्स्यथ, किन्तु सर्व्वाः कन्या जीवन्तीः
स्थापयिष्यथ।

## २ द्वितीयोऽध्यायः।

१ मूषाजननं तस्य नदीतटे पेटके स्थापनं ५ फिरौणः कन्यया स्वीकरणं ११ तेन मिस्रीयलोकस्य वधः १५ फिरौणः कोपात् मिदियनदेशं प्रति तस्य पलायनं २३ इस्रायेल् लोकान् प्रतीश्वरस्य दया च।

अनन्तरं लेविवंशजातस्य कस्यचिन्मनुष्यस्य लेवि- १

२ वंशस्य कन्याया विवाहे जाते सा नारी गर्भं धृत्वा
पुत्रमेकं प्रसुषुवे ; ततः सा तं बालकम् अतीव सुन्दरं
३ दृष्ट्वा तं मासत्रयपर्य्यन्तं गोपयामास। ततो गोपयि-
तुम् असमर्था सती नलनिर्म्मितं पेटकम् आनीय पङ्क-
मर्जरसाभ्यां संलिप्य तन्मध्ये बालकं निधाय नदि-
४ नीतीरस्थनलवने स्थापयामास। ततस्तस्य का दशा-
घटेतेति दर्शनार्थं तस्य भगिनी दूरे स्थितवती।
५ अनन्तरं फिरौणः कन्या स्नातुम् आगच्छत् तस्या
दास्यो नदीतटे भ्रमन्ति, तदा नलवनमध्ये पेटकं वि-
६ लोक्य तमानेतुं निजदासीं प्रेषयामास। पश्चात् सा पेटकं
मोचयित्वा तं बालकं ददर्श, तस्मिन् बालके क्रन्दति सा
७ सदया सती जगाद, एष इब्रीयाणां बालकः। तदानीं
तस्य भगिनी फिरौणः कन्यां बभाषे, त्वत्कृते बालकमेनं
दुग्धं पाययितुम् अहं गत्वा इब्रीयां धात्रीमेकां आहूय
किमानेष्यामि? ततः फिरौणः कन्या कथयामास, याहि।
८ तदानीं सा कन्या गत्वा तद्बालकस्य मातरम् आहूया-
९ नयत्। ततः फिरौणः कन्या तामवदत् तमेनं बालकं
गृहीत्वा मदर्थं पयः पायय, तव वेतनमहं दास्यामि ;
तदा सा योषित् बालकमादाय पयः पाययामास।
१० ततो बालके एधिते सा तमादाय फिरौणः कन्यायै

ददौ, ततो बालकस्तस्या एव पुत्त्रोऽभवत् तदानीं सा
तस्य नाम मुसाम् (आकर्षितं) चकार, यतः सा कथया-
मास तोयादहमिमम् आकार्षम्।

इत्थं मुसा महान् भूत्वा एकदा निजभ्रातॄणां ११
समीपं गत्वा तान् अतीव भारं वोढुं ददर्श;
एको मिस्री तस्य भ्रातॄणाम् एकम् इब्रिं प्रहरति
तदपि ददर्श। अतः स चतुर्दिशो वीक्षमाणः कमपि न १२
पश्यन् मिस्रीयं हत्वा सिकतामध्ये गोपयामास। अपरं १३
द्वितीयदिने स बहिर्गत्वा द्वाविब्रीयौ कलहकारिणौ
वीक्ष्य दोषिणं कथयामास, त्वं निजभ्रातरं कथं प्रह-
रसि? ततः स उक्तवान् अस्माकमुपरि कस्त्वां राजानं १४
-विचारयितारं वा नियुक्तवान्? त्वं यथा मिस्रीयलोकं
हतवान् तथा किं मामपि हन्तुमिच्छसि? ततो मुसा
भीतः सन् उक्तवान् एतत् कर्म्मावश्यं प्रकाशितं।

ततः फिरौन् कथामेतां श्रुत्वा मुसां हन्तुं मृगया- १५
ञ्चक्रे। तस्मात् मुसा फिरौणः सम्मुखात् पलायमानो १६
मिदियन्देशे वस्तुं गत्वा कस्यचित् प्रस्रेः समीपे समु-
पविवेश। एतस्मिन्नन्तरे मिदियनीययाजकस्य सप्त १७
कन्यास्तत्रागत्य पितुर्मेषव्रजं तोयं पाययितुं तोय-
मुत्तोल्य तोयपात्रं पूरयामासुः। किन्तु मेषपालका १८

आगत्य तास्ताडयामासुः; ततो मूसा उत्थाय ता उप-
चकार, तासां मेषपालकांश्च पयांसि पाययाञ्चकार।
१८ अनन्तरं तासु निजपितू रूयेलः समीपं गतासु स ताः
१९ पप्रच्छ, यूयमद्य कथं शीघ्रमागताः? ततस्ताः कथया-
ञ्चक्रुः, एको मिस्री मेषपालकानां करेभ्योऽस्मान् उद्धृत्य
अस्मत्कृते यथेष्टाप उदतोलयत्, अस्माकं मेषव्रजञ्च
२० तायं पायितवान्। तदानीं स निजकन्या अवदत्, स
कुत्र? यूयं तं कुतस्त्यक्त्वागमत? यूयं भोक्तुम् आह्वयत।
२१ अनन्तरं मूसा तेन मनुष्येण सार्द्धं वस्तुं समसन्यत, तदा
२२ स मूसां निजां सिप्पोरां कन्यां विवाहयामास। तत-
स्तया योषिता पुत्रे प्रसूते तस्य नाम गेर्षोम्(अन्य स्थाने
विदेशीति) कृतवान्, यतः स उक्तवान्, अहं विदेशे वि-
देशी तिष्ठामि।

२३ बहुकालात् परं मिस्रीयराजस्य मृत्युर्बभूव; अपरं
इस्रायेलः वंशाना दासत्वकारणात् कातरोक्तिं क्रन्द-
नञ्च चक्रुः, तदा तेषां दासत्वकारणात् तत् कातरत्व-
२४ ऊर्द्ध ईश्वरस्य समीपम् उपतस्थौ। तत ईश्वरस्तेषामा-
र्त्तस्वरं निशम्य इब्राहीम् इस्हाक् याकूब्भिः सार्द्धं
२५ स्वकृतपूर्व्वनियमं स्मृत्वा इस्रायेल्वंशं प्रति निरीक्ष्य
तान् अनुजग्राह।

३ तृतीयोऽध्यायः।

१ प्रज्वलितस्तम्बे मूसासमीप ईश्वर प्रकाशनं ७ मूसां प्रतीश्वर कथन ११ ईश्वरेण सार्द्धं मूसालापनञ्च।

अपरं मूसा मिदियन्निवासियाजकस्य निजश्वशुरस्य १
यिथ्रोमेषव्रजं चारयितुम् आरभत; एकदा स मेषव्रजं
गृहीत्वा कान्तारस्थ पश्चात् होरेब्नामानम् ईश्वरस्य
पर्व्वतम् आजगाम, तदा स्तम्बमध्यस्थिताग्निशिखायाम् २
ईश्वरस्य दूतस्तस्य सन्निधौ प्रत्यक्षोऽभवत्; तदानीं स
दृष्ट्वा ददर्श, स्तम्बो वह्निना प्रज्वलति, तथापि स्तम्बो न
नश्यति। अतो मूसाः कथितवान् स्तम्बः कुतो न दह्यते ? ३
अहमेकपार्श्वेन गत्वा महाश्चर्य्यं वीक्षिष्ये। पश्चात् स ४
द्रष्टुम् एकपार्श्वेन याति, इति विलोक्य परमेश्वरः
स्तम्बमध्यात् तमाहूय जगाद, हे मूसा हे मूसाः, ततः
सोऽवदत्, एषोऽहम् उपतिष्ठामि। तदानीं स कथितवान्, ५
त्वम् एतस्य स्थानस्य समीपं मागच्छ, तव पदाभ्याम् उपा-
नहौ मोचय, त्वं यत्र स्थाने तिष्ठसि, सा मेध्या भूः। सोपरम- ६
पि कथयामास, तव पूर्व्वपुरुषाणाम् ईश्वरः, फलत इब्रा-
होम ईश्वरः, इस्हाक ईश्वरो, याकूब ईश्वरश्च, ततो मूसा
ईश्वरं प्रति वीक्षितुं बिभ्यत्, निजास्यम् आच्छादत्।

अनन्तरं परमेश्वरः कथयाञ्चकार, अहं मिसर- ७
देशस्थानां निजलोकानाम् अतिशयक्लेशं दृष्टवान्, कार्य्य-

शासकैस्तेषां रोदनञ्च श्रुतवान्, तेषां यातनाश्च ज्ञात-
८ वान्। अतो मिस्रीणां करेभ्यस्तान् उद्धर्त्तुम् अस्मात्
देशात् उत्तमं विस्तृतम् अर्थात् किनानीय हित्तीय
इमोरीय पिरिषीय हिव्वीय यिबूषीयाणां दुग्धमधु-
९ प्रवाहिदेशं तान् नेतुम् अवरूढवान्। पश्य, इस्रायेलो
वंशानाम् आर्त्तस्वरो मम कर्णगोचरीभूतः, यमुपद्रवं
१० मिस्रीयास्तान् प्रति कुर्व्वन्ति, तदहं दृष्टवान्। अतइदा-
नीम् आगच्छ, त्वामहं फिरौणः समीपं प्रेषयामि, त्वं
मिसर्द्देशात् मम इस्रायेल्लोकान् वहिः करिष्यसि।
११ ततो मूसा ईश्वराय कथितवान्, कोहम् यत्
फिरौणः समीपं गत्वा मिसर्द्देशात् इस्रायेल्वंशं वहिः
कर्त्तुं शक्नोमि? तदा स कथितवान्, अहं तव सहायो
१२ भविष्यामि, ततो मिसरो लोकनिवहं वहिरानीय
यूयम् अस्मिन् गिरावीश्वरभजनं करिष्यथ; इति मम
१३ तत्प्रेषणस्य लक्ष्म भविष्यति। पश्चात् मूसा ईश्वराय
कथयामास, पश्चाहं इस्रायेल्वंशानां समीपं गत्वा तान्
इति वाचं वदामि, युष्माकं पूर्व्वपुरुषाणाम् ईश्वरो
युष्माकं समीपं मां प्रेषितवान्; किन्तु तस्य किन्नामेति
१४ चेत् ते पृच्छन्ति, तर्हि किमहं प्रतिवदिष्यामि? तत
ईश्वरो मूसामवदत् अहं योस्मि, सोस्मि; पुनः कथित-

वान्, इस्रायेल्वंशम् इति वद,स्वयम्भु र्युष्माकं समीपं
मां प्रेरितवान्। तत ईश्वरः पुन र्मूसां बभाषे, त्वम् १५
इस्रायेल्वंशम् इति वक्ष्यसि, युष्माकं पूर्ब्बपुरुषाणां
प्रभु र्यिहोवाः (परमेश्वरः) अर्थात् इब्राहीम ईश्वर,
इस्हाक ईश्वरो, याकूब ईश्वरो, युष्माकं समीपं मां
प्रेरितवान्; मम नामैतत्;एतच्च चिरकालं पुरुषानुक्रा-
रेण स्मरणाय भविष्यति।त्वं गत्वा इस्रायेल्वंशस्य प्रा- १६
चीनानां सभां कारयित्वा कथामिमां कथय, युष्माकं
पुरुषाणां प्रभुः परमेश्वरः अर्थात् इब्राहीम इस्हाको
याकूबश्चेश्वरोमां दर्शनं दत्त्वा गदितवान्,अहं युष्मान्,
मिसरदेशे युष्मान् प्रति कृतान् सकलान् व्यवहारांश्च
दृष्टवान्। अतोहं पूर्ब्बोक्तवाक्यानुसारात् मिसरः क्लेशात् १७
युष्मान् बहिरानीय किनानीयानां हित्तीयानां इमो-
रीयानां पिरिषीयानां हिव्वीयानां यिबूषीयानां
देशम् अर्थात् दुग्धमधुप्रवाहिदेशम् आनेष्यामि; तेन
ते तव कथां श्रोष्यन्ति। तदा त्वम् इस्रायेल्वंशस्य १८
प्राचीनाश्च मिसरो राज्ञः समीपं गत्वा कथामेतां
कथयिष्यथ, इब्रीणां प्रभुः परमेश्वरोऽस्माकं साक्षात्
अभवत्; अतो विनयेहं,अस्माकं प्रभुं परमेश्वरम् उद्दिश्य
होमं कर्त्तुम् इदानीं दिनत्रयमार्गं प्रान्तरं यातुम्

१९ युष्मान् यातुं दास्यतु। किन्त्वहं निश्चयं जानामि, मिस्री-
यराजं प्रति पराक्रान्तहस्ते न प्रकाशिते स युष्मान् यातुं
२० वारयिष्यति। ततो मिसरो मध्ये निजहस्तं विस्तार्य्य
मया कृताश्चर्य्यकर्म्मणा तस्मिन् प्रहते स युष्मान् यातुम्
२१ आदेक्ष्यति। अपरं मिस्रीणां साक्षात् एतान् जनान्
प्रसन्नदयान् करिष्यामि, तेन गमनकाले यूयं रिक्तकरा
२२ न यास्यथ। किन्तु सर्व्वा योषितः स्वस्वसमीपवासिनीनां
योषितां समीपे स्वस्वगृहस्थानां प्रवासिनीनाञ्च समीपे
सुवर्णपात्रं रूप्यपात्रं वसनञ्च याचित्वा ग्रहीष्यन्ति;
तान्यपि यूयं स्वस्वपुत्राणां स्वस्वकन्यानाञ्च गात्रेषु परि-
२२ धापयिष्यथ। इत्थं मिस्रीयाणां द्रव्याणि हरिष्यथ।

४ चतुर्थोऽध्यायः।

१ मूसायष्टेः सर्पत्वं ६ तत्करस्य कुष्ठित्वं १० मूसा गन्तुमनङ्गीकारात् तेन सार्द्धं यातुं हारोणो नियुक्तत्वं १८ मिसरं यानं मूसागमनं २१ फिरौणः सन्निधौ वक्तव्यवचः २४ मूसासुतस्य त्वक्छेदः २७ हारोणो मूसासाक्षात् करणं २९ इस्रायेल्वंशसन्निधिं परमेश्वरकथाप्रकाशनञ्च।

१ अनन्तरं मूसाः प्रत्युवाच ते मां न प्रत्येष्यन्ति, मम
कथायां न मनांसि च निधास्यन्ति; किन्तु ते वदिष्य-
२ न्ति, परमेश्वरस्तां दर्शनं न दत्तवान्। तदानीं परमे-
३ श्वरस्तं पप्रच्छ, तव करे किं? स उक्तवान् यष्टिः। ततः स

उवाच, तां भूमौ निक्षिप। तेन तस्यां यष्ट्यां भूमौ
निक्षिप्तायां सर्पो बभूव ; ततो मूसास्तस्य सम्मुखात्
पलायितः। तदा परमेश्वरो मूसां जगाद, करं प्रसार्य्य ४
तस्य पुच्छं धारय ; ततः स करं प्रसार्य्य पुच्छं धृतवान्
तदा स तस्य करे यष्टिर्बभूव। अत्राहं तेषां पूर्व्वपुरु- ५
षाणां प्रभुः परमेश्वर इब्राहीम इस्हाको याकूबश्चेश्वर
स्तव समीपे प्रकाशितोऽभवम्, इति ते सर्व्वे प्रत्येष्यन्ति।
अपरं परमेश्वरः पुनस्तं जगाद, तव करं वक्षसि देहि ; ६
ततः स वक्षसि करं दत्त्वा वहिः कृतवान् तस्य करः
कुष्ठयुक्तो हिमवर्णो बभूव। पश्चात् स उदितवान् त्वं ७
पुन र्वक्षसि निजकरं निधेहि, ततस्तेन पुन र्वक्षसि
करं दत्त्वा वहिः कृतः, तेन तस्य करः तदन्यकरवत्
प्रकृतमांसो बभूव। ते यदि त्वां न प्रत्येष्यन्ति, ८
तव पूर्व्वीयलक्षणे च न मनांसि निधास्यन्ति, तर्हि
द्वितीयचिह्नात् प्रत्येष्यन्ति। द्वाभ्यां चिह्नाभ्यामपि ९
यदि न प्रत्येष्यन्ति, तव कथायाञ्च न मनो निधास्यन्ति,
तर्हि तटिन्याः किञ्चित् तोयमादाय शुष्कभूमौ पातय ;
तत्र त्वं तटिन्या यत् तोयं तत् तोलयिष्यसि, ततः
शुष्कभूमौ शोणितं भविष्यति।
अनन्तरं मूसाः परमेश्वरं बभाषे, हे मम प्रभो, एत- १०

त्कालात् प्राक् वा निजदासस्य निकटे भवतः कथा-
कथनात् परमपि नाहं वाक्पटुः, किन्तु धीरवक्ताहं
११ जडजिह्वश्चास्मि। पश्चात् परमेश्वरस्तं प्रत्युक्तवान् मानु-
षाणां वदननिर्म्माता कः? तथा मूकं वधिरं द्रष्टारं
अन्धञ्च को निर्म्मिमीते? अहं परमेश्वरः किं तत् न
१२ करोमि? अत इदानीं याहि, तव वदने तिष्ठन्नहं वक्तव्यां
१३ वाचं त्वां शिक्षयिष्यामि। ततः स कथितवान्, हे मम
१४ प्रभो, विनयेऽहं, येन प्रेषणीयं तेन प्रेषयतु। ततो मूषां
प्रति परमेश्वरस्य कोपे ज्वलिते स कथितवान्, लेवीयो
हारोण् किं तव भ्राता न भवति? सुवक्तासौ तमहं
जानामि, स त्वां साक्षात् कर्त्तुम् आगच्छति, त्वां पश्यन्
१५ हृष्टचित्तो भविष्यति। त्वं तेन सार्द्धं संलपिष्यसि, तस्य
वदने वाक्यं दास्यसि; अहं तव वदने तस्य च वदने
१६ तिष्ठन् करणीयं कर्म्म युवां शिक्षयिष्यामि। स लोका-
नां समीपे तव वाचं वदिष्यति, स तव वदनस्वरूपो
१७ भविष्यति। त्वञ्च तस्येश्वरस्वरूपो भविष्यसि। अपरं त्वं
स्वकरेण यष्टिं धरन् तयैतानि चित्राणि दर्शयिष्यसि।
१८ अनन्तरं मूसा निजश्वशुरस्य यिथ्रोसमीपं प्रत्या-
गत्य बभाषे, विनयेऽहं, मिसरि स्थितानां भ्रातृणां
समीपम् इदानीं व्याघुट्य गन्तुं, तेच यावत् जीवन्तः

सन्ति नवेति द्रष्टुञ्च मां यातुम् अनुजानीहि ; ततः
यिथ्रो मूसामवदत्, कुशलं गच्छ। अपरं परमेश्वरो मि- १९
दियनि मूसे कथितवान्, ये जनास्त्वां हन्तुम् ऐच्छन्,
ते सर्व्वेऽम्रियन्त, तस्मात् त्वं मिसरं व्याघुट्य गच्छ।
तदानीं मूसा निजजायां सुतौ च गर्द्दभम् आरोह्य २०
मिसर्देशं व्यावृत्य गतवान्, अपरं स स्वकरेण ताम् ईश्व-
रीयां यष्टिं जग्राह।

अपरं परमेश्वरो मूसां जगाद, त्वयि मिसरं पुन २१
र्गन्तुम् उद्यते तव करेणाहं यान्यद्भुतानि कर्म्माणि
कर्त्तुं दत्तवान्, तानि विविच्य फिरौणः समक्षं कुरु ;
किन्त्वहं तदन्तःकरणं कठिनीकरिष्यामि, तेन स
लोकान् न त्यक्ष्यति। अपरं त्वं फिरौणे कथयिष्यसि, २२
परमेश्वरः कथयति, इस्रायेल्वंशो मम सुतः अर्थात्
मम ज्येष्ठपुत्रस्वरूपः। अतोऽहं तुभ्यं कथयामि, मां सेवितुं २३
मम पुत्रं परित्यज ; तेन यदि तं त्यक्तुं नेच्छसि,
तर्हि तव पुत्रम् अर्थात् तव ज्येष्ठपुत्रमहं हनिष्यामि।

अनन्तरं मार्गे उत्तरणीयगेहे परमेश्वरस्तं दर्शनं २४
दत्वा हन्तुम् उद्यतवान्। तदानीं सिप्पोरा तीक्ष्णास्त्रं २५
गृहीत्वा निजपुत्रस्य त्वचं छित्त्वा तां तस्य चरणसन्नि-
धौ निधाय कथितवान्, त्वं निश्चितं मम शोणितपाती

२६ वरः। अनन्तरम् ईश्वरेण तस्मिन् त्यक्ते सा योषित्
त्वक्छेदकारणात् तस्मै कथितवान्, त्वं मम शोणित-
पाती वरोषि।
२७ अनन्तरं परमेश्वरो हारोणं बभाषे, त्वं मूसां
साक्षात् कर्त्तुं प्रान्तरं व्रज। ततः स गत्वा ईश्वरस्य
२८ पर्व्वते तेन सार्द्धं मिलित्वा तं चुम्बितवान्। तदानीं
मूसा निरूपितम् ईश्वरीयं सर्व्ववाक्यं तेनाज्ञापितं
सकलचिह्नञ्च हारोणं ज्ञापयामास।
२९ अनन्तरं मूसाहारोणौ गत्वा इस्रायेलवंशस्य प्राची-
३० नानां सभां कारयामासतुः, ततो मूसां प्रति कथिताः
परमेश्वरीया याः कथास्ताः हारोण् तेभ्यः कथयामास;
अपरं लोकानां दृष्टिगोचरे तानि सर्व्वलक्षणानि प्रका-
३१ शयामास। तेन लोकाः प्रतीतवन्तः, ततः परमेश्वर
इस्रायेलवंशं निरीक्ष्य तेषां दुःखानि दृष्टवान्, इति
विज्ञाय ते तं प्रणम्य समाराधयामासुः।

## ५ पञ्चमोऽध्यायः।

१ मूसाहारोणैः फिरौणः समीपगमनं, तौ प्रति फिरौणः कथनं ६ लोकेषु पक्ककर्म्मणो भारार्पणं १० तेभ्यः पलालादानं १५ राज्ञः समीपे कार्य्यसाधकानां काकुक्तिः २० मूसाहारोणौ प्रति सर्व्वकथनं ईश्वरं प्रति मूसा निवेदनञ्च।

१ ततो मूसाहारोणौ प्रविश्य फिरौणे कथयामासतुः,

इस्रायेलः प्रभुः परमेश्वरः कथयति, प्रान्तरे मामुद्दिश्य
महचरणार्थं मम लोकान् गन्तुम् अनुजानीहि। तदा २
फिरौण् कथयामास, परमेश्वरः कः? यत् तस्य कथां
मानित्वा इस्रायेलो वंशं यातुम् आदेक्ष्यामि? नाहं पर-
मेश्वरं परिचिनोमि नेस्रायेलो वंशञ्च यातुम् आदेक्ष्या- ३
मि। तौ जगदतुः इब्रीयाणाम् ईश्वर आवां दर्शनं दत्त-
वान्; अत आवां विनयावहे, प्रभुं परमेश्वरम् उद्दिश्य
होतुं दिनत्रयपथं यातुम् अस्मान् प्रान्तरं यातुम् आ-
दिश; नो चेत्सोऽस्मान् महामार्य्या चन्द्रहासेन च निपात- ४
यिष्यति। ततो मिस्रीयो राजा तान् जगाद, हे मूसाः
हे हारोण, युवां कार्य्यात् लोकान् कुतो निवारयथः?
युवां निजं निजं भारवहनं कर्म्म यातं। फिरौण् पुनर्बभा ५
षे, पश्यतं, एतस्मिन् देशे मनुष्या एते इदानीं बहवः, यु-
वाञ्च तान् भारवहनकर्म्मणो निवर्त्तयितुम् इच्छथः।
अपरं फिरौण् तस्मिन् दिने लोकानां कर्म्मकार- ६
यितॄन् अध्यक्षान् आज्ञापयामास, यूयम् इष्टकादि
निर्म्माणार्थं पूर्व्ववत् एतेभ्यः पलालान् मा दत्त; ते गत्वा ७
स्वार्थं पलालान् संगृह्णन्तु। अपरं पुरा यतीष्टक- ८
निर्म्माणभार आसीत्, इदानीं तं भारमर्पयत; तस्मात्
न्यूनं मा कार्ष्ट; यतस्तेऽलसाः, अत उच्चैरुवन्तः कथयन्ति,

९ ईश्वरमुद्दिश्य होतुं अस्मान् यातुम् आज्ञापय । तस्मात्
तेषामुपरि पुनरधिककर्म्मणां भारमर्पयत, तेन ते
परि श्रमं कुर्व्वन्तोऽनर्थकवाक्ये मनांसि न निधास्यन्ति ।
१० अनन्तरं कार्य्यकारयितारोऽधिपतयश्च वहिर्गत्वा
तेभ्योऽकथयन् फिरौण् इमां कथां कथयति, अहं युष्मभ्यं
११ पुनः पलालान् न प्रदास्यामि। यूयं यत्र प्राप्नुथ, तत्रैव
पलालान् संगृह्णीत; किन्तु युष्माकं कार्य्यं किञ्चिदपि
१२ न्यूनं न भविष्यति। ततो लोकाः पलालानां विनिमयेन
१३ नालान् संग्रहीतुं कृत्स्नं मिसरदेशं बभ्रमुः। ततः कार्य्य-
कारयितारः क्षिप्रं कर्म्म कथयामासुः, पलालप्राप्ति-
काले यूयं यथा कर्म्माणि कृतवन्तः, इदानीमपि दैव
सिकानि निरूपितानि कर्म्माणि तथा सम्पूर्णानि कुरुत।
१४ इस्रायेलवंशोपरि यान् कार्य्यकारयितॄन् फिरौणो-
ऽधिपतयो ऽस्थापयन्, तेऽपि प्रहृता अभवन्, इमां कथां
पृष्टाश्चाभवन्, यूयं पूर्व्ववत् इष्टकनिर्म्माणस्य निरूपि-
तानि कार्य्याणि कुतोऽद्य ह्यः सम्पूर्णानि न कारयथ?
१५ ततः इस्रायेलो वंशीयाधिपतय आगत्य फिरौणः
समीपे प्रोच्चैरुवन्तो निवेदयामासुः, कुतस्त्वं निज-
१६ दासेभ्यः साद्धं एतादृकं व्यवहरसि ? तव दासेभ्यः कोऽपि
पलालान् न ददाति, तथापि ते कथयन्ति, इष्टकानि

निर्म्मातेति ; अपरं तव दासेषाः प्रहृता भवन्ति, किन्तु
तव लोकानां दोषः। ततः स कथयामास, यूयमलसा १७
यूयमलसा इति हेतो र्वदथ, परमेश्वरम् उद्दिश्य होतुम्
अस्मान् यातुम् आज्ञापय। इदानीं गच्छत, कर्म्माणि १८
कुरुत, युष्मभ्यं पलाला न दास्यन्ते ; तथापि युष्माभि-
रिष्टकानां सम्पूर्णसंख्या दातव्या। तेन युष्माकं दैवसिक- १९
निरूपितेष्टकानां किञ्चिदपि न्यूनत्वं न भविष्यति,
इति तेन कथिते इस्रायेली वंशानाम् अधिपतयो
ददृशु र्वयमतीव दुर्दशायाम् अपताम।

अनन्तरं ते फिरौणः समीपात् निर्गत्य पथि स्व २०
सम्मुखे मूसां हारोणञ्च साक्षात् चक्रुः। तदानीं ते ताभ्यां २१
कथयामासुः, परमेश्वरो युवां प्रति निरीक्ष्य विचारयतु,
यतो युवां फिरौणः तस्य दासानाञ्च समक्षम् अस्मान्
दुर्गन्धरूपान् कृत्वा हन्तुं तेषां करेषु खड्गदानम्
दत्तवन्तौ। ततो मूसाः, परमेश्वरस्य समीपं परावृत्य २२
गत्वा तस्मै कथयाञ्चकार, हे प्रभो त्वमेतेषां लोकानां
कुतोऽमङ्गलम् अकार्षीः। मां वा कुतः प्रहितवान्। यदा-
रभ्य तव नाम्ना फिरौणः समीपे कथयितुम् आगच्छं, २३
तदारभ्य स एतेषां लोकानाम् अमङ्गलं करोति, त्वन्तु
निजलोकानां कमप्युद्धारं न कृतवान्।

## ६ षष्ठोऽध्यायः।

१ मूसासमीप ईश्वरस्य पुनः प्रतिज्ञाकं १० फिरौणः समीपे मूसाप्रेरणं १४ रूबेन् शिमियोनो वंशश्रेणी १६ लेवेर्वंश-श्रेणी २८ मूसां प्रति परमेश्वराज्ञा।

१ अनन्तरं परमेश्वरो मूसामवदत्, अहं फिरौणं प्रति
यत् करिष्यामि तत् त्वम् इदानीमेव द्रक्ष्यसि; स दोर्बलं
प्रकाश्य लोकान् यातुम् अनुज्ञास्यति, दोर्बलं प्रकाश्य
२ निजदेशात् तान् दूरीकरिष्यति। ईश्वरो मूसां सार्द्धम्
३ आलप्य पुनः कथयामास, अहं यिहोवाः, अहं इब्रा-
हीम इसहाको याकूबस्य समीपे यिहोवानाम्ना न
विख्याय सर्व्वशक्तिमान् ईश्वरनाम्ना विख्यातोऽभवम्।
४ अपरं किनान्देशम् अर्थात् तेषां प्रवासीयदेशम् अहं
५ तेभ्यो दास्यामि, तैः सार्द्धम् एतं नियमं निर्णीतवान्।
इदानीं मिस्रीयाणां समीपे दास्ये नियुक्तानाम् इस्राये-
लो वंशानां कातर्य्योक्तिं श्रुत्वा निजं तं नियमं स्मृतवान्।
६ अत इस्रायेलो वंशं वद, परमेश्वरोऽहं, मिस्रीयाणां भार-
वहनात् युष्मान् उद्धरिष्यामि, दास्याच्च युष्मान् मोच-
यिष्यामि; अपरं विस्तीर्णदोर्भ्यां महादण्डेन च युष्मान्
७ उद्धरिष्यामि। अहं युष्मान् निजजनीकृत्य युष्माकमीश्व-
रो भविष्यामि, तेनाहं मिस्रीयाणां भारवहनात् युष्माकं
८ वहिष्कर्त्ता प्रभुः परमेश्वर इति ज्ञास्यथ। इब्राहीमे

इस्हाके याकूबे च यं देशं दातुमहम् अङ्गीकृतवान्, तं
देशं युष्मान् नीत्वा युष्मभ्यम् अधिकारं दास्यामि;
यतोऽहमेव परमेश्वरः। अनन्तरं मूसा इस्रायेलो वंशं ९
तदनुसारेण भाषितवान्; किन्तु ते मनोदुःखकठिन-
दास्यकारणात् मूसः कथायां मनांसि न निदधिरे।

अनन्तरं परमेश्वरो मूसे कथितवान्, त्वं गत्वा १०
मिसरो राजानं फिरौणं वद, त्वम् इस्रायेलो वंशं
निजदेशात् विसृज। ततो मूसाः परमेश्वराय कथया- ११
मास, पश्य, इस्रायेलवंशा मम कथायां न मनांसि
निदधिरे; तदात्वे ममाच्छन्नवाचो वाचं फिरौण् कथं १२
श्रोष्यति? तदा परमेश्वरो मूसां हारोणञ्च जगाद,
अपरम् इस्रायेलो वंशं मिसरदेशात् बहिष्कर्त्तुं मिसरो १३
भूपस्य फिरौणः समीप इस्रायेलः समीपे च कथयितुम्
तावाज्ञापयामास।

एते लोकाः स्वस्वपितृवंशानां मुख्याः। इस्रायेलो १४
ज्येष्ठसुतो रूबेन् तस्य सुतो हनोक् पल्लू हिष्रोन् कर्म्मिः
एते रूबेनो वंशाः।

शिमियोनः सुता यिमूयेल् यामीन् ओहद् या- १५
खीन् सोहर् किनानीयजायायाः सुतः शौल; इमे
शिमियोनो वंशाः।

१६ वंशानुसारतो लेविवंशस्य नामानि। गेर्शोन् कि-
हात् मिरारिः। लेवेर्वयः सप्तत्रिंशाधिकशतं वत्सरा
१७ आसन्। वंशानुसारतो गेर्शोनः सुतानां नामानि
१८ लिब्निः शिमियिः। किहातः सुताः अम्रम् यिषहर्
हिब्रोण् उषीयेल् तस्य किहातस्त्रयस्त्रिंशदधिकशतं
१९ वत्सरा वय आसीत्। मिरारेः सुतौ मह्लि मूशिः
२० इमे पुरुषानुसारात् लेवे र्वंशाः। अपरम् अम्रम्
स्वपितृस्वसरि योकेबदि समूढायां सा नारी तस्मात्
हारोणं मूसाञ्च प्रसुषुवे; तस्याम्रम आयुः सप्तत्रिंशदधि-
२१ काः शतवत्सरा आसन्। यिषहरः सुताः कोरहो नेफग्
२२ सिख्रिश्च उषीयेलः सुतो मीशायेल् इलीषाफन् सिफ्रिश्च।
२३ हारोन् अम्मीनादबः सुतां नहशोनो भगिनीं इलीशे-
बाम् उद्ववाह; ततः सा स्त्री तदर्थं नादबम् अबीहूम्
२४ इलियासरम् ईथामरञ्च प्रसुषुवे। कोरहस्य सुता असीर्
२५ इल्काना अबीयासफ् एते कोरहस्य वंशाः। अपरं
हारोणः सुत इलियासर् पुटीयेलः कन्याम् उद्ववाह,
सा तदर्थं पीनिहसं प्रसुषुवे; एते लेवीयपूर्व्वपुरुषाणां
२६ मध्ये वंशानुसारतो मुख्या आसन्। मिसर्देशात् सैन्यैः
सार्द्धम् इस्रायेलो वंशम् आनयतम्, इत्याज्ञां परमेश्वरो
२७ यौ प्रति कृतवान्, तावेतौ हारोन् मूसौ। अपरं यौ

मिसरदेशात् इस्रायेल्वंशं प्रेरयितुं फिरौणं समादि-
ष्टवन्तौ, एतौ तौ मूसाहारोणौ।

अपरं यदा परमेश्वरो मिसरदेशे मूसामवदत्, तदा- २८
इमां कथां जगाद, परमेश्वरोऽहं तुभ्यं यत् कथ- २९
यामि, तत् मिसरीयराजं फिरौणं वद। ततो मूसाः ३०
परमेश्वरस्य समक्षं कथितवान्, अप्रगल्भवागहं मम कथां
फिरौण् कथं श्रोष्यति?

७ सप्तमोऽध्यायः।

१ फिरौणः समीपं यातुं परमेश्वरस्य मूसाज्ञापनं ८ यष्टेः सर्पत्वकथनं १४ फिरौणं प्रति पुनर्मूसाप्रेरणं १९ जलस्य शोणितत्वकथनञ्च।

अपरं परमेश्वरो मूसां जगाद, पश्य त्वामहं १
फिरौणः समीपम् ईश्वरस्वरूपं नियुक्तवान्, तव भ्राता
हारोण् त्वत्प्रचारको भविष्यति। अहं त्वां यां कथां २
आज्ञापयामि, तां सर्व्वां त्वं कथयिष्यसि; तव भ्राता
हारोण् इस्रायेलो वंशं देशात् प्रेरयितुं फिरौणे कथ-
यिष्यति। किन्त्वहं फिरौणो हृदयं कठिनीकरि- ३
ष्यामि, मिसरदेशे बाहुल्येन मम चिह्नम् आश्चर्य्यकर्म्म च
करिष्यामि; तथापि फिरौण् युष्माकं वाचि न मनो
निधास्यति। अतोऽहं मिसरदेशं प्रति हस्तं प्रसार्य्य ४
महादण्डेन मिसरः स्वसैन्यम् अर्थात् निजलोकान्

५ इस्रायेल्वंशं वहिः करिष्यामि। मिस्रीयान् प्रति
स्वकरं प्रसार्य्य तेषां मध्याद् इस्रायेल्वंशे मया वहि-
६ रानीते परमेश्वरोऽहमेवेति ते ज्ञास्यन्ति। ततो मूसा-
हारोणौ परमेश्वरीयाज्ञानुसारात् कर्म्म कृतवन्तौ।
७ फिरौणा सार्द्धं कथाकथनकाले मूसा अशीतिवत्सरा
हारोणस्त्र्यशीतिवत्सरा वय आसीत्।
८ अपरं परमेश्वरो मूसाहारोणौ जगाद, युवां किञ्चन
९ लक्ष्म दर्शयतम्, इति वाक्यं यदि फिरौन् युवां गदति,
तर्हि हारोणं वदिष्यसि, त्वं यष्टिमादाय फिरौणः
१० सम्मुखे निक्षिप; तदा सा यष्टिः सर्पो भविष्यति। तदा
मूसाहारोणौ फिरौणः समीपं गत्वा परमेश्वरस्याज्ञानु-
सारात् कर्म्म कृतवन्तौ; अपरं फिरौणस्तस्य दासानाञ्च
११ सम्मुखे हारोणा यष्ट्यां निक्षिप्तायां सा सर्पो बभूव। तदा
फिरौन् निजान् विदुषो गुणिनश्चाकृतवान्; ततो
मिस्रीया मायाविलोका निजमायया तथैव चक्रुः।
१२ फलतस्ते स्वां स्वां यष्टिं निचिक्षिपुः, ताश्च सर्व्वा भुजगा
१३ बभूवुः; किन्तु हारोणो यष्टिस्तेषां यष्टीर्जघास। तेन
फिरौणो हृदये कठिनीभूते परमेश्वरो यथा कथित-
वान्, तदनुसारेण स तयोः कथायां न मनो निदधे।
१४ अनन्तरं परमेश्वरो मूसां जगाद, फिरौणो हृदयं

कठिनम् अभवत्, तेन स लोकान् यातुं नादिश्यति।
अतस्त्वं प्रातः फिरौणः समीपं याहि, पश्य, तस्मिन् १५
तोयसमीपं गते तस्यागमनपर्य्यन्तं त्वं तटिनीतीरे
तिष्ठ; या च यष्टिः सर्पोऽभवत्, तामपि करेण गृहाण।
फिरौणे कथय, प्रान्तरे माम् आराधयितुं मम लोकान् १६
त्वं यातुम् अनुजानीहि; इब्रीयाणां प्रभुः परमेश्वर एतां
कथां कथयितुं तव समीपं मां प्रहितवान्, किन्तु
पश्य, त्वम् अद्य कथायां मनो न निधत्तवान्। परमे- १७
श्वर इत्थं कथयति, पश्याहं स्वकरस्थया यष्ट्या तटिनी-
तोयं प्रहरिष्यामि, तदा तटिनीतोयं शोणितं भवि-
ष्यति। तटिन्याञ्च ये मत्स्याः सन्ति, तेपि मरिष्यन्ति, १८
तटिनी च दुर्गन्धा भविष्यन्ति; ततो मिस्रीया लोका
स्तटिनीतोयं पातुं विरजिष्यन्ति, तेनाहमेव परमेश्वर
इति त्वं ज्ञास्यसि।

अनन्तरं परमेश्वरो मूसां बभाषे, हारोणं कथामेतां १९
कथय, त्वं निजयष्टिं गृहीत्वा मिसरदेशस्य तोयोपरि
अर्थात् तस्य स्रोतस्तटिनीपरीवाहजलाशयाणाम्
उपरि निजकरं प्रसारय, तेन ते शोणितानि भवि-
ष्यन्ति, मिसरदेशस्य सर्व्वत्र काष्ठमय प्रस्तरमय पात्रेषु
च शोणितं भविष्यति। तदानीं मूसाहारोणौ परमेश्व- २०

राज्ञया तादृशं कृतवन्तौ; फलतो यष्टिमादाय
फिरौण तस्य दासानाञ्च सम्मुखे तटिन्यास्तोयोपरि
प्रहृतवन्तौ, तेन तटिन्याः सर्व्वतोयं शोणितं बभूव।
२१ तटिन्याः सर्व्वमीनेषु मृतेषु तटिनी दुर्गन्धा बभूव च;
तेन मिसरीयास्तटिनीतोयं पातुं न शेकुः, सर्व्वमिसर-
२२ देशश्च रक्तीभूतः। तदानीं मिसरीया मायाविलोकाश्च
निजमायया तादृशं चक्रुः, तेन फिरौणो हृदये कठिनी-
भूते ईश्वरीयवचनानुसारात् स तयोः कथायां न मनो
२३ निदधे। पश्चात् फिरौण् परावृत्य निजगेहं जगाम,
२४ तथापि न मनो निदधे। किन्तु सर्व्वे मिसरीयलोका-
स्तटिनीतोयं पातुम् अशक्नुवन्तः पेयतोयार्थं तटिनी-
चतुर्दिक्षु चख्नुः।

## ८ अष्टमोऽध्यायः ।

१ मण्डूककथनं ८ मूसाः समीपे फिरौणो निवेदनं १६ धूलितो यूकाभवनं तेन मायाविनां पराजितत्वं २० मक्षिककथनं २५ फिरौणो मनसः काठिन्यञ्च ।

१ परमेश्वरस्य तटिन्याघातात् परं सप्तसु दिनेषु
समाप्तेषु परमेश्वरो मूसां गदितवान्, त्वं फिरौणः
समीपं गत्वा तस्मै कथामिमां कथय, परमेश्वरः कथा-
मिमां कथयति, मां सेवितुं मदीयलोकान् यातुम
२ अनुजानीहि। यदि यातुं नादेक्ष्यसि, तर्हि मण्डूकैः

तव सर्व्वप्रदेशान् नाशयिष्यामि। तटिन्यां बहुमण्डूकान् ३
उत्पादयिष्यामि ; ततः सर्व्वे ते मण्डूका उत्थाय तव गृहं
शयनगेहं शयनीयञ्च तव दासानां गेहान् तव लोकानां
गेहान् तव चूल्लीं तव गोधूमचूर्णनपात्रञ्च प्रवेक्ष्यन्ति।
तवोपरि तव लोकानां दासानाञ्चोपरि आरोक्ष्यन्ति। ४
ततः परमेश्वरो मूसां जगाद, हारोणं कथय, त्वं स्रोत- ५
सां तटिनीनां जलाधाराणाञ्चोपरि यष्टिविशिष्टहस्तं
प्रसारय, मिसर्देशोपरि मण्डूकान् आगमय। ततो हा- ६
रोणा मिसर्देशीयानां सर्व्वतोयानाम् उपरि करे प्रसा-
रिते मण्डूका उत्थाय मिसर्देशं व्यानशिरे। तदानीं माया- ७
विनोऽपि तथा कृत्वा मिसर्देशोपरि मण्डूकान् आनयन्।

अनन्तरं फिरौन् मूसां हारोणञ्चाहूय बभाषे, ८
मत्तो मम लोकेभ्यश्च मण्डूकान् इमान् दूरयितुं
परमेश्वरं प्रार्थयेथां, ततोऽहं परमेश्वरम् उद्दिश्य
होतुं लोकान् यातुम् आदेक्ष्यामि। तदा मूसाः ९
फिरौणं कथयामास, मण्डूका यथा त्वत्तस्तव
गृहाच्च दूरी भवन्ति, केवलं तटिन्यां तिष्ठन्तीति, तव
त्वदीयदासेयानां लोकानाञ्च कृते परमेश्वरस्य समीपे
कदा प्रार्थयिष्ये? तत् माम् अनुमतञ्च वद। स कथित- १०
वान्, श्वः करिष्यसि ; तदा भाषितवान् अस्माकं प्रभो

परमेश्वरस्य समः कोपि नास्तीति त्वं यथा जानासि
११ तदर्थं तव वाक्यानुसारादेव भवतु। मण्डूकास्त्वत्तस्तव
गृहात् दासेभ्यो लोकेभ्यश्च दूरीभूय केवलतटिन्यां
१२ स्थास्यन्ति। ततो मूसाहारोणौ फिरौणः समीपात् बहि-
र्गतवन्तौ, पश्चात् मूसाः फिरौणो विरुद्धम् उत्पन्नानां
१३ मण्डूकानां निवारणार्थम् ईश्वरं प्रार्थयामास। ततः
परमेश्वरेण मूसा प्रार्थनायां साधितायां फिरौणो गृहे
१४ ग्रामे क्षेत्रे च सर्व्वे मण्डूका अम्रियन्त। ततो लोकैः
१५ संगृह्य तेषु राशीकृतेषु, देशे दुर्गन्धो बभूव। किन्तु
फिरौन् विपदो निष्पत्तिं निरीक्ष्य पुनरपि स्वान्तः-
करणं कठिनीकृत्वा परमेश्वरीयवाक्यानुसारात् तयोः
कथायां न मनो निदधे।

१६ तस्मात् परमेश्वरो मूसां जगाद, हारोणं कथय,
सर्व्वस्मिन् मिसर्देशे यथा यूका भवन्ति, तदर्थं त्वं निज-
१७ यष्टिं उत्थाप्य भूमे धूलिं प्रहर। ततस्तौ तादृशं चक्रतुः
फलतो हारोण् निजयष्टिविशिष्टं करम् उत्थाप्य भूमे
धूलिं प्रहृतवान्; तदा मानुषेषु पशुषु च यूका अभ-
१८ वन् मिसर्देशस्य सर्व्वा धूल्यश्च यूका अभवन्। तदानीं
मायाविनो निजमायया तथा कृत्वा यूका उत्पादयितुं
यतितवन्तः; किन्तु किमपि न शेकुः। मानुषेषु पशुषु

च यूकाश्च जाताः, तौ फिरौणे कथयामासतुः, कर्म्मे १९
दम् ईश्वरस्याङ्गुलिकृतं; तथापि फिरौन् अन्तःकरणं
कठिनीकृत्य परमेश्वरस्य वाक्यानुसारात् तयोः कथायां
न मनो निदधे।

अनन्तरं परमेश्वरो मूसाम् अगाद्, त्वं प्रत्यूषएव २०
उत्थाय फिरौणः सम्मुखे तिष्ठ; पश्य, तस्मिन् तोय-
समीपम् आगते तस्मै कथामिमां कथय, परमेश्वरः
कथयति, मां सेवितुं मम लोकान् यातुम् आदिश।
किन्तु यदि मम लोकान् यातुं नाज्ञापयिष्यसि, तर्हि २१
त्वां तव दासेयान् लोकान् गृहांश्च मक्षकानहं प्रेषयि-
ष्यामि, तै र्मिस्रीयाणां गृहा ग्रामाश्च परिपूरयिष्यन्ते।
किन्तु जगतो मध्ये केवलोऽहं परमेश्वरः, इति त्वां २२
ज्ञापयितुं तस्मिन् दिने मम लोकानां निवासस्थानं
गोशनप्रदेशं पृथक् करिष्यामि, तत्स्थानं मक्षकसंघो
न यास्यति। अहं श्वः स्वीयलोकानां युष्माकञ्च भेदं २३
करिष्यामि, श्व इदं चिह्नञ्च भविष्यति। पश्चात् परमे- २४
श्वरः तथैव कृतवान्, तेन फिरौणः स्वस्य दासानाञ्च
गृहेषु कृत्स्नमिस्रदेशे च वृहत् मक्षकनिवह आगतः,
तेन देशो विनष्टुम् आरभत।

तदानीं फिरौन् मूसां हारोणञ्चाहूय कथयामास, २५

युवां गत्वा देशस्य मध्ये युवयोरीश्वरम् उद्दिश्य जुहुतं।
२६ ततो मूसा अगाद्, तद् आवयो र्न युक्तं, यतोऽस्माकं
प्रभुं परमेश्वरम् उद्दिश्य मिस्रिणां घृण्यवस्तुना होतव्यम्,
इदानीं मिस्रिणां घृण्यवस्तुना तेषां समक्षं हुते, लोकाः
२७ किमस्मान् पाषाणान् निक्षिप्य न मारयिष्यन्ति। तस्माद्
वयं दिनत्रयपथं प्रान्तरं गत्वा निजप्रभोः परमेश्वरस्य
आज्ञा भविष्यति, तदनुसारेण तमुद्दिश्य होष्यामः।
२८ पश्चात् फिरौन् कथयामास, युष्मानहं यातुम् आज्ञा-
पयामि, यूयं प्रान्तरं गत्वा निजप्रभुं परमेश्वरम् उद्दिश्य
जुहुत; किन्तु बहुदूरं मा गच्छत, मदर्थञ्च प्रार्थये-
२९ ध्वम्। तदानीं मूसा बभाषे, पश्य, त्वत्त स्तव दासानां
लोकानाञ्च समीपात् श्वः सर्व्वान् मक्षिकान् द्रवयितुं
तव समीपात् प्रयाय प्रार्थनामेतां ईश्वरसन्निधौ करि-
ष्यामि, किन्तु परमेश्वरम् उद्दिश्य होतुं लोकान्
३० प्रस्थापयितुं फिरौन् पुनरपि न वञ्चयतु। ततो मूसाः
फिरौणः समीपाद् वहिर्गत्वा परमेश्वरं प्रार्थितवान्।
३१ तदा परमेश्वरो मूसाप्रार्थनानुसारेण फिरौण स्तस्य
लोकेभ्यो दासेभ्यश्च सर्व्वमक्षिकानिवहान् द्रवयामास,
३२ तेषामेकोऽपि शेषो नातिष्ठत्। तदानीं फिरौन् स्वान्तः-
करणं कठिनीकृत्य लोकान् गन्तुं न्यवारयत्।

## ९ नवमोऽध्यायः।

१ मारीकथनं ८ मानुषाणां पशूनाञ्च विस्फोटककथनं १३ शिलावर्षणकथनं २२ शिलाहतिभवनं २७ मूसाः समीपे फिरौणो निवेदनं तस्य मनसः काठिन्यञ्च।

अनन्तरं परमेश्वरो मूसां भाषितवान्, त्वं फिरौणः १
सन्निधिं गत्वा तं ब्रूहि, इब्रीणां प्रभुः परमेश्वर इति २
कथयति, मां सेवितुं त्वं मम लोकान् यातुम् आदिश।
किन्तु यदि यातुं आदेष्टुम् असंमन्य, इदानीं बाध- ३
को भवसि, तर्हि तव क्षेत्रस्थ हयगर्द्दभमहाङ्गगो-
मेषादिपशूनाम् उपरि परमेश्वरो हस्तं प्रसारयि-
ष्यति, तेन तेषां मध्येऽतीव महामारी भविष्यति।
किन्तु परमेश्वर इस्रायेल्वंशानां पशुभ्यो मिस्रीणां ४
पशूनां भेदं करिष्यति; तत इस्रायेल्वंशानां कोपि
पशु र्न मरिष्यति। परमेश्वरः समयं निरूप्य कथित- ५
वान्; अहं श्वो देशे कर्म्मैतत् करिष्यामि। परेऽहनि ६
परमेश्वरेण तथैव कृते मिस्रीणां सर्व्वे पशवो मृताः,
किन्त्विस्रायेल्वंशस्य पशूनाम् एकोपि न मृतः।
तदानीं फिरौण् लोकं प्रहित्य इस्रायेल् वंशस्य पशुरे- ७
कोपि न मृत इति दृष्टवान्, तथापि फिरौणोऽन्तः-
करणे कठिने सति स लोकान् यातुं न्यवारयत्।

८ अपरं परमेश्वरो मूसाहारोणौ जगाद, युवां मुष्टिं
पूरयित्वा चुल्ल्या भस्म गृह्णीतं; ततो मूसाः फिरौणः
९ समक्षं तद् आकाशं प्रति विकिरतु। तेन मिसर्देशो-
परि धूलि र्भविष्यति, मिसरः सर्व्वमनुष्याणां पशूनाञ्च
१० गात्रेषु क्षतयुक्तविस्फोटका भविष्यन्ति। तदानीं तौ
चुल्ल्या भस्म गृहीत्वा फिरौणः संमुखे स्थितवन्तौ;
ततो मूसा गगणं प्रति तद् विकीर्णवान्, तदा सर्व्व
मनुष्याणां पशूनाञ्च गात्रेषु क्षतयुक्तविस्फोटका बभूवुः।
११ तदानीं सर्व्वेषां मिस्रिणां मायाविल्लोकानाञ्च गात्रेषु
विस्फोटकेषु जातेषु तत्कृते मायाविनो मूसाः समक्ष-
१२ मपि स्थातुं न शेकुः। ततः परमेश्वरः फिरौणो मनः
कठिनी कृतवान्, ततः स मूसाद्वारा कथितस्य पर-
मेश्वरीयवाक्यस्यानुसारात् तयोः कथायां न मनो
निदधे।

१३ अनन्तरं परमेश्वरो मूसां गदितवान्, त्वं प्रत्यूष
उत्थाय फिरौणः समुखे तिष्ठन् तस्मै कथामेतां कथय,
इब्रीणां प्रभुः परमेश्वरः कथयति, मां सेवितुं त्वं मम
१४ लोकान् यातुं आज्ञापय। नो चेत् इदानीमहं तवान्तः-
करणोपरि तव दासानां लोकानाञ्चोपरि सर्व्वथा
महामारीं प्रेषयिष्यामि, तेन सर्व्वजगति मम समः

कोपि नास्तीति त्वं ज्ञास्यसि। इदानीमहं निजकरं १५
प्रसार्य्य महामार्य्या त्वां तव मानुषांश्च प्रहरिष्यामि, तेन
त्वं पृथिव्या उच्छिन्नो भविष्यसि। अहं त्वद्द्वारा परा- १६
क्रमं दर्शयितुं सर्व्वपृथिव्यां निजनाम प्रकाशयितुञ्च
त्वां स्थापितवान्। किन्तु त्वम् इदानीमपि मम लोकान् १७
यातुं निषिध्य निजदर्पं प्रकाशयसि। पश्य, श्वो मिस- १८
रदेशे तादृशीं महाशिलावृष्टिम् अहं कारयिष्यामि,
मिसरो निर्म्माणकालात् अद्यपर्य्यन्तं यादृशी कदापि
नाभवत्। इदानीं लोकान् प्रहित्य क्षेत्रे तव पश्वादयो १९
ये ये सन्ति, तान् संरक्षाण; यतो यो मनुजो यश्च
पशुः क्षेत्रे स्थास्यति, स गेहानीतो न भविष्यति, तेषा-
मुपरि शिलावृष्टौ सत्यां ते प्राणान् त्यक्ष्यन्ति। तदा २०
फिरौणो दासानां मध्ये ये केचित् परमेश्वरीयकथातो
बिभ्यु स्ते द्रुतं निजान् दासान् पशूंश्च गृहम् आनिन्युः।
ये च केचित् परमेश्वरस्य वाक्ये मनांसि न निदधिरे, २१
ते निजान् दासान् पशूंश्च क्षेत्रे तत्यजुः।

अनन्तरं परमेश्वरो मूसामवदत्, त्वं गगणं प्रति २२
स्वकरं प्रसारय, तेन मिसरदेशस्य सर्व्वत्र मनुजपशु-
क्षेत्रस्थतृणानां सर्व्वेषाम् उपरि शिलावृष्टि र्भविष्यति।
ततो मूसा निजयष्टिं गगणं प्रति प्रसारितायां पर- २३

मेश्वरो मेघगर्ज्जनं शिलावृष्टिञ्च चकार, विद्युच्च भूम्यु-
परि वेगेन जगाम, इत्थं परमेश्वरो मिसर्द्देशे शिला-
२४ वृष्टिं चकार। ततः शिलामिश्रिताग्निवृष्टौ सत्यां
अतीवासह्यनीया बभूव, इदृशी शिलावृष्टि र्मिसर्द्देशे
२५ तस्य स्थापनम् आरभ्य कदापि नाभवत्। तेन सर्व्वे-
मिसर्द्देशस्य क्षेत्रस्था मनुजाः पशवश्च सर्व्वे शिलाभि
र्हताः, क्षेत्रस्य सर्व्वतृणानि शिलावृष्टे र्नष्टानि क्षेत्रस्य
२६ सर्व्वे पादपा भग्नाः। किन्त्विस्रायेलवंशस्य वासस्थाने
गोशनप्रदेशे शिलावृष्टि र्नाभवत्।

२७ ततः फिरौन् लोकं प्रहित्य मूसां हारोणञ्चाहूय
बभाषे, अहम् एककृत्व इदं पापं कृतवान्, परमेश्वरस्तु
२८ प्रकृतएव; किन्त्वहं मदीयलोकाश्च दुष्कर्म्मिणः। घोरः
मेघगर्ज्जनं शिलावृष्टिश्च यथा पुनरधिकं न जायते,
तदर्थं युवां परमेश्वरं प्रति प्रार्थयेथाम्, यतो यदभूत्,
तदेव प्रचुरं; ततोऽहं युष्मान् यातुम् आदेक्ष्यामि,
२९ युष्माकं पुनर्विलम्बो न भविष्यति। मूसाः तमवदत् अहं
इदानीमेव गत्वा परमेश्वरं प्रति करौ प्रसारयिष्यामि,
तेन मेघगर्ज्जनं निवर्त्तिष्यते, शिलावृष्टिः पुन र्न भवि-
ष्यति पृथिवीयं परमेश्वरस्येति च त्वं ज्ञास्यसि।
३० किन्तु त्वं तव दासाश्च यूयं इदानीमपि परेमश्व-

रात् प्रभोः न बिभीथ, इत्यहं जानामि। अतस्या ३१
यवाश्च सर्व्वे विनष्टाः, यतो यवाः कनिश्रयुक्ताः अतस्यः
श्रस्ययुक्ता आसन्। किन्तु गोधूमा जनराश्च बाल्यत्वात् ३२
न नष्टाः। पश्चात् फिरौणः समीपात् नगरात् बहि- ३३
र्गत्वा परमेश्वरं प्रति करौ प्रसारितवान्; ततो मेघ-
गर्जनं शिलावृष्टिश्च निवृत्तौ भूमौ पुन र्न वृष्टि र्बभूव।
तदानीं वृष्टिशिलावृष्टिमेघगर्जनानां निवृत्तिं विलोक्य ३४
फिरौण् पुनः पापं कृतवान्, स तस्य दासाश्च मनांसि
कठिनानि चक्रुः। फिरौणान्तःकरणे कठिने सति ३५
मूसोक्तस्य परमेश्वरस्य वाक्यानुसारात् स इस्रायेलोवंशं
यातुं न्यवारयत्।

१० दशमोऽध्यायः।

१ स्फूककीट कथनं ७ फिरौणं प्रति दासानां कथनं १२ स्फूक-
कीटागमनं १६ मूसां प्रति फिरौणो निवेदनं २१ घोरान्ध-
कारकथनं २४ मूसां प्रति फिरौणः मेषकथनञ्च।

अनन्तरं परमेश्वरो मूसां जगाद, त्वं फिरौणो १
निकटं याहि, यथाहं तस्य समक्षं निजचिह्नं प्रकाश-
यामि; अहश्च मिसरि यत् यत् कर्म्म तेषां यत् यत् २
चिह्नञ्च कृतवान्, तद् यूयं निजपुत्रपौत्राणां कर्णेषु
यथा कथयिष्यथ, अहमेव परमेश्वर इति च यथा
यूयं ज्ञास्यथ, तदर्थं फिरौणस्तस्य दासानाञ्च मनांसि

३ कठिनानि कृतवान्। तदा मूसाहारोणौ फिरौणः समीपं
गत्वा जगदतुः, इब्रीणां प्रभुः परमेश्वरः कथयति, त्वं
मम समक्षं नम्रो भवितुं कति कालान् न संमंस्यसे, मां
४ सेवितुं मम लोकान् यातुम् अनुजानीहि। किन्तु यातुं
यदि नानुजानासि, तर्हि पश्य, श्वः स्वकर्कोटान् तव देशम्
५ आनेष्यामि। ते तव सर्व्वां भूमीं तथा छादयिष्यन्ति,
यथा कोपि न द्रक्ष्यति, शिलावृष्टे रक्षिता येऽवशिष्टाः
सन्ति, तान् ते खादिष्यन्ति, क्षेत्रात् उत्पन्नान् युष्माकं
६ सर्व्वान् वृक्षांश्च ते खादिष्यन्ति। अपरं तैस्तव गेहा
स्तव दासानां गेहा मिस्रीयलोकानाञ्च गेहाः पूरयि-
ष्यन्ते, तव पूर्व्वपुरुषाः पूर्व्वपुरुषाणां पूर्व्वपुरुषाश्च धर-
ण्याम् आ जन्मतोऽद्य यावत् कदाप्येतादृशं न ददृशुः;
तदा मूसा मुखं परावर्त्त्य फिरौणः समीपात् वहि
र्जगाम।

७ अनन्तरं फिरौणो दासास्तस्मै कथयामासु, मानु-
षोयं कति कालं अस्माकं उन्माथरूपः स्थास्यति? एतेषां
प्रभुं परमेश्वरं सेवितुम् एतान् यातुम् अनुमन्यस्व, मिस्र-
८ देशोऽनश्यत्, तत् त्वं किमिदानीमपि न बुध्यसे? तदानीं
मूसाहारोणौ फिरौणः समीपम् आनीतौ; ततः स
ताभ्यां कथितवान्, यूयं निजप्रभुं सेवितुं गच्छत;

किन्तु के के गमिष्यन्ति। ततो मूसाः कथयामास, वयं ९
निजबालकान् वृद्धांश्च सङ्गिनः कृत्वा गमिष्यामः ; अप-
रम् अस्माकं पुत्रान् कन्यांश्च गवादीन् मेषव्रजांश्च गृहीत्वा
गमिष्यामः, कुतः परमेश्वरम् उद्दिश्य महः कर्त्तव्यः।
तदानीं फिरौन् तान् उक्तवान् परमेश्वरो यदि युष्माकं १०
सहायोऽस्ति, तथाप्यहं युष्मान् युष्माकं बालकांश्च यातुं
नानुज्ञास्यामि, सावधाना भवत, गतेषु युष्माकम्
अमङ्गलं घटिष्यते। इत्थं नहि युष्माकं पुरुषा गत्वा ११
परमेश्वरम् आराधयन्तु, युष्माभिरपि पूर्व्वमेवं प्रार्थितं ;
ततस्ते फिरौणः सम्मुखात् दूरीकृता अभवन्।

अनन्तरं परमेश्वरो मूसां गदितवान्, त्वं मिस- १२
र्देशे शूककीटार्थं स्वकरं प्रसारय, तेन ते मिसर्देशम्
आगत्य शिलावृष्टेरवशिष्टानि भूमेस्तृणादीनि सर्व्वाणि
भक्षयिष्यन्ति। तदा मूसा मिसर्देशोपरि निजयष्टिं १३
प्रसारितवान्, ततः परमेश्वरो देशे कृत्स्नम् अहर्निशं
पूर्व्वीयवायुं वाहयामास, पश्चात् प्रातःकाले पूर्व्वीय-
वायुना शूककीटा उपतस्थुः। ततः सकलमिसर्देशं १४
शूककीटा व्याप्तवन्तः, मिसरः सकलप्रदेशे शूककीटाः
पेतुः, तादृशा भयानकाः शूककीटाः कदापि नासन्,
पश्चादपि कदापि न भविष्यन्ति। तैः सकला भूमीग- १५

च्छन्नाः ते देशस्यान्धकाराच्छन्नो बभूव, पृथिव्यां शिला-
वृष्टेरवशिष्टानि यानि यानि भूमेस्तृणानि पादपानां
फलानि चासन्, तानि सर्व्वाणि ते बभक्षुः, तेन मिसरः
सर्व्वप्रदेशे कस्मिन्नपि पादपे क्षेत्रस्य तृणेषु किञ्चि-
न्मात्रोऽपि हरिद्वर्णो नातिष्ठत्।
१६ तदानीं फिरौण् मूसां हारोणञ्च त्वरितमाहूय
बभाषे, युष्माकं प्रभोः परमेश्वरस्य विरुद्धम् अहं पापं
१७ कृतवान्। विनयेऽहं केवलमेतद्वारं मम पापं क्षान्त्वा मत्त
इमं मृत्युस्वरूपं दूरयितुञ्च निजप्रभोः परमेश्वरस्य समक्षं
१८ प्रार्थयध्वम्। ततः स फिरौणः समीपात् बहिर्गत्वा पर-
१९ मेश्वरस्य साक्षात् प्रार्थयाञ्चक्रे। परमेश्वरः प्रबलं पाश्चात्य-
वायुम् आनाय्य देशात् शूककीटान् उत्थाप्य सूफ्सागरे
निचिक्षेप; ततो मिसरः कस्मिंश्चिदपि प्रदेशे शूककी-
२० टानाम् एकोऽपि न तस्थौ। किन्तु परमेश्वरेण फिरौणो
हृदये कठिनीकृते स इस्रायेलो वंशं यातुं न्यवारयत्।
२१ अपरं परमेश्वरो मूसां जगाद, त्वं गगणं प्रति हस्तं
प्रसारय, तेन मिसरदेशे ध्वान्तं भविष्यति, ध्वान्तकार-
२२ णात् लोका हस्तामर्शं करिष्यन्ति। पश्चात् मूसा गगणं
प्रति करः प्रसारितः; ततो दिनत्रयं यावत् मिसरदेशस्य
२३ सर्व्वत्र तथान्धतमसं जातं, येन जनस्तदन्यजनं नापश्यत्

दिनत्रयं यावत् कोपि निजस्थानात् उत्थातुं न शशाक,
किन्त्विस्रायेलो वंशस्य वासस्थाने आलोकएवासीत्।

तदानीं फिरौण् मूसामाहूय बभाषे, यूयं परमे- २४
श्वरं सेवितुं यात, युष्माभिः सार्द्धं बालकास्र यान्तु
केवलं युष्माकं मेषगवादीनां व्रजा स्तिष्ठन्तु। ततो मूसाः २५
कथितवान्, वयम् अस्माकं प्रभुं परमेश्वरम् उद्दिश्य
यानि बलिहोमीयद्रव्याणि दास्यामः, तान्यस्माकं
हस्तेषु भवता दातव्यानि। अस्माभिः सार्द्धम् अस्माकं २६
पशवो यास्यन्ति, तेषाम् एकः खुरोपि नावशेक्ष्यते,
यतोस्माकं प्रभुं परमेश्वरं सेवितुं तेषां मध्यात् द्रव्याणि
ग्रहीतव्यानि, किन्तु केन द्रव्येण परमेश्वरः सेवितव्य
इति तत्र स्थाने उपस्थितेः प्रागस्माभि र्न ज्ञायते।

अनन्तरं परमेश्वरेण फिरौणो मनसि कठिने कृते स २७
तेषां गमनं नानुजानात्। पश्चात् फिरौण् तस्मै कथि- २८
तवान्, मम समीपात् दूरीभव, किन्तु सावधानो भव
मन्मुखं पुनः कदापि न वीक्षस्व, यदा मन्मुखं द्रक्ष्यसि,
तदैव मरिष्यसि। ततो मूसाः कथितवान्, तथा भद्र- २९
मुक्तं तव वदनं पुनः कदापि नैव वीक्षिष्येहम्।

## ११ एकादशोऽध्यायः ।

१ मिस्रिभ्यः द्रव्यं याचित्वा प्रहीतुम् इस्रायेलो वंशं प्रतीश्वर-
स्याज्ञा ४ प्रथमजातापत्यानां हननप्रतिज्ञा ९ फिरौणो
मनसः काठिन्यताकथनञ्च ।

१ अपरं परमेश्वरो मूसाम् अवदत्, अहं फिरौणो मिसर-
स्योपरि पुनरेकमुत्पातम् आनेष्यामि ; ततः स युष्मान्
इतो यातुम् आदेक्ष्यति, यातुम् आदेशकाले युष्मान्
२ सर्व्वैः सार्द्धं वहिः करिष्यति। तस्मात् इदानीं लोकानां
कर्णगोचरे कथय, एकैकः पुमान् निजप्रतिवासित
एकैका योषिच्च निजप्रतिवासिनोतो रूप्यपात्रं स्वर्णपा-
३ त्रञ्च याचित्वा गृह्णातु। अनन्तरं परमेश्वरो मिस्रिणां
दृष्टौ लोकान् दयाभाजनानि चकार, तथा मिसर्देशे
फिरौणो दासानां लोकानाञ्च दृष्टौ मूसा अतीव मान्यः
पुरुष आसीत्।
४ अनन्तरं मूसा अवदत्, अहं मध्यरात्रौ मिसरो मध्येन
५ यास्यामि, इति परमेश्वरो वदति। तेन मिसर्देशस्थिताः
सर्व्वे प्रथमजाता, अर्थात् सिंहासनस्थफिरौणः प्रथम-
जातम् आरभ्य पिंषत्या दास्याः प्रथमजातं यावत् मरि-
६ ष्यन्ति, पशूनामपि सर्व्वे प्रथमजा मरिष्यन्ति। तेन मिस-
र्देशे कदापि यादृशं नाभवत्, न भविष्यति, तादृशं महा-
७ रोदनं भविष्यति। किन्तु परमेश्वरो मिस्रीयलोकेभ्य

इस्रायेलीयलोकान् भिन्नान् करोतीति यथा यूयं जा-
नीथ, तदर्थं इस्रायेल्वंशस्य मानुषान् पशूंश्च प्रति कोपि
कुक्कुरो जिह्वां न दोलायिष्यते। तेन तवैते दासा अव- ८
रुह्य मत्समीपम् आगमिष्यन्ति, मां प्रणम्य च कथ-
यिष्यन्ति, त्वं त्वत्पश्चाद्गामिलोकाश्च बहिर्भवत ; तत्
पश्चाद् अहं बहिर्भविष्यामि। ततः परं स महाक्रुद्धः
सन् फिरौणः समीपात् बहिर्जगाम।

परमेश्वरो मूसाम् अवादीत्, फिरौण् युष्माकं वाक्ये न ९
मनो निधास्यति, तेनाहं मिसर्देशे स्वस्याश्चर्य्यकर्म्मणां
वृद्धिं करिष्यामि। अपरं मूसाहारोणौ फिरौणः समक्षं १०
एतानि चित्रकार्य्याणि कृतवन्तौ ; किन्तु परमेश्वरः
फिरौणो हृदयं कठिनं कृतवान्, तस्मात् स स्वदेशात्
इस्रायेलीवंशं यातुं नानुज्ञातवान्।

१२ द्वादशोऽध्यायः।

१ वत्सरस्य प्रथममासनिर्णयः ३ निस्तारपर्व्वणो निरूपणं ११ निस्तारपर्व्वणो विवरणं १८ निस्तारपर्व्वणि किण्वशून्यपूपभक्षणं २१ प्राचीनान् प्रति मूसा आज्ञापनं २९ मिस्रीयानां प्रथमजातापत्यानां वधः ३१ इस्रायेलीयानां बहिर्यानं ३७ तेषां संख्या ४० मिसरे वासस्य कालनिर्णयः ४३ निस्तारपर्व्वणि भोजनविधेर्निरूपणं च।

अपरं मिसर्देशे परमेश्वरो मूसां हारोणञ्च जगाद, १

२ मासोयं युष्माकं प्रधानमासो वत्सरस्य प्रथममासो
भविष्यति।
३ इस्रायेलो वंशीयसर्व्वसमाजेभ्य इमां कथय, मास-
स्यास्य दशमे दिने यूयं प्रत्येकगृहस्थपितृगृहानुसारत
४ एकैकनिवेशनार्थम् एकैकं मेषशावकं गृह्णीत। मेषं
भोक्तुं यस्य परिजना अल्पा भवन्ति, स तस्य
प्रतिवासी च मेषशावकमेकमेव ग्रहीष्यति, यूयं लो-
कानां संख्यां भोजनशक्त्यनुसारतो मेषशावकमधि गण-
५ यिष्यथ। यूयं मेषव्रजात् छागव्रजाच्च निर्द्दोषम्
एकवत्सरवयस्कं पुंशावकं गृहीत्वा तस्य मासस्य चतु-
६ र्दशदिनं यावत् स्थापयिष्यथ। पश्चात् यूयं इस्रायेलो
वंशस्य सर्व्वे समाजाः सन्ध्यायां तं शावकं बलिं दास्यथ।
७ अपरं तस्य किञ्चित् शोणितं गृहीत्वा तन्मेषस्य भोजन-
गेहस्य द्वारस्य पार्श्वद्वयस्थितकाष्ठयो स्तदुपरिस्थित-
८ काष्ठे च शोणितविन्दून् प्रक्षेप्स्यथ। तस्यां रात्रौ वह्नि-
९ दग्धं पललं किण्वशून्यं पूपञ्च भोक्ष्यध्वे। तत्पललम्
अपक्वं तोयसिद्धं वा न भोक्ष्यध्वे, किन्तु तस्य मुण्ड-
१० जंघावपूंषि वह्निना दग्ध्वा भोक्ष्यध्वे। अपरं प्रातःकालं
यावत् तस्य किमपि नावशेषयिष्यध्वे; यदि प्रातःकालं
यावत् किञ्चिदवशिष्यते तर्हि तदग्निना दाहयध्वम्।

इत्थं यूयं कटिबन्धनं विधाय पादयोः पादुके ११
दत्त्वा हस्तेन यष्टिं गृहीत्वा तद् भोक्ष्यध्वे; एतत् पर-
मेश्वरस्य निस्तारपर्व्व भविष्यति, तस्मात् यूयं त्वरितं
तद् भोक्ष्यध्वे। यतोऽहमद्य रात्रौ मिसर्देशस्य मध्येन १२
गत्वा मिसर्देशस्य मनुजानां पश्वादीनाञ्च सर्व्वान् प्रथम-
जातान् प्रहरिष्यामि, मिस्रिणो देवांश्च दण्डयि-
ष्यामि, परमेश्वरोऽहमेव। तस्मात् यूयं यस्मिन् यस्मिन् १३
गेहे तिष्ठथ, तस्मिन् तस्मिन् गेहे तच्छोणितस्य चिह्ने
स्थापिते यदाहं मिसर्देशं दण्डयिष्यामि, तदानीं तच्छो-
णितं विलोक्य युष्मान् विहाय गमिष्यामि, स च दण्डो
युष्मान् नाशयितुं युष्मान् प्रति नोपस्थास्यति। स दिवसो १४
यथा युष्माकं स्मरणविषयो भवति, तदर्थं यूयं पुरुष-
परम्परया तद्दिनं परमेश्वरस्य पर्व्वत्वेन पालयिष्यध्वे,
इदं पर्व्व नित्यविधिना पालयिष्यध्वे। अपरं यूयं सप्त- १५
दिनानि यावत् किण्वशून्यं पूपं खादिष्यथ, किन्तु प्रथमे
दिने निजगेहेभ्यः किण्वशून्यान् पूपान् नापसारयत;
यतो यो जनः आ प्रथमदिनात् सप्तमदिनं यावत्
किण्वमिश्रितपूपं भोक्ष्यते स इस्रायेला वंशात् उच्छिन्नो
भविष्यति। अपरं प्रथमे दिने युष्माकं पवित्रसमारोहो १६
भविष्यति, सप्तमे दिनेपि युष्माकं पवित्रसमारोहो

भविष्यति, पुनश्च तस्मिन् दिनद्वये प्रतिप्राणिभक्ष्या-
योजनं विनान्यत् कर्म्म न करिष्यथ, तत् केवलेन त्वया
१७ साध्यताम्। इत्थं युष्माभिः किण्वशून्यपूपीयं पर्व्व पाल-
नीयं, यत स्तस्मिन्नेव दिनेहं मिसर्देशात् युष्मान् उद्धृ-
रिष्यामि, तस्माद् यूयं पुरुषपरम्परातो विधिवत् तत्
पर्व्व पालयिष्यथ।

१८ यूयं प्रथममासस्य चतुर्दशदिनस्य सायंकालमारभ्य
एकविंशतितमदिनस्य सायंकालं यावत् किण्वशून्य-
१९ पूपान् भोक्ष्यध्वे। सप्ताहं युष्माकं गृहे किण्वाभावो
भूयात्, यतो विदेशी स्वदेशी वा यो जनोऽत्र किण्वमि-
श्रितं पूपं भुंक्ते, स इस्रायेलो वंशस्य समाजात् उच्छिन्नो
२० भविष्यति। यूयं किण्वयुक्तं किमपि द्रव्यं मा भक्षत
किन्तु स्वस्व सर्व्वगृहेषु किण्वशून्यपूपान् भक्षत।

२१ तदानीं मूसा इस्रायेलो वंशस्य सर्व्वान् प्राचीन-
लोकान् आहूय बभाषे, यूयं निजार्थं स्वस्वपरिजनानु-
सारात् एकैकं मेषशावकं गृहीत्वा निस्तारपर्व्वणि बलिं
२२ दत्त। अपरम् एकमुष्टिम् एषोवं गृहीत्वा पात्रस्थिते
शोणितेऽवगाहयित्वा द्वारोपरिष्ठे काष्ठे पार्श्वस्थित-
काष्ठयोश्च पात्रस्थितशोणितविन्दून् प्रक्षिप, प्रभातं यावत्
२३ युष्माकं कोपि गृहद्वारात् वहि र्मा गच्छतु। यतः परमे-

श्वरो मिस्रिणो हन्तुं तेषां मध्येन गमिष्यति, तेन युष्माकं
द्वारसमीपेन गमनकाले द्वारोपरिस्थकाष्ठे पार्श्वद्वय-
काष्ठयोश्च शोणितचिह्नं दृष्ट्वा युष्माकं गृहं हन्तारं प्रवेष्टुं
वारयिष्यति। अपरं यूयं युष्माकं सन्तानाश्च विधिमेतत् २४
एतत् पर्व्व पालयिष्यथ। परमेश्वरो निजप्रतिज्ञानुसा- २५
रेण युष्मभ्यं यं देशं दास्यति तत्र प्रवेशकालेऽपि पर्व्वैतत्
पालयिष्यथ। अपरं युष्माकं सन्तानैः एतत्पर्व्वणोऽभि- २६
प्रायः कः? इति पृष्टे यूयं कथयिष्यथ, परमेश्वरेण मिस्रि-
णाम् आघातकाले अस्माकं गेहरक्षणकाले च मिसरि- २७
प्रवासिन इस्रायेलो वंशस्य गृहान् परित्यज्य गतवान्,
तस्येदं निस्तारपर्व्व। तदानीं लोका दण्डवत् प्रणेमुः, २८
अनन्तरम् इस्रायेलः सन्ताना गच्छन्तो मूसाहारोणौ
प्रति कथितस्येश्वरवाक्यस्यानुसारात् कर्म्म कृतवन्तः।

ततः परं परमेश्वरो मध्यरात्रौ सिंहासनस्थितस्य २९
फिरौणः प्रथमजातं सन्तानम् आरभ्य कारास्थित-
लोकानां प्रथमजातसन्तानं यावत् मिसरदेशस्थिताम्
सर्व्वान् प्रथमजातसन्तानान् पशूनां प्रथमजातशावकांश्च
आजघान। ततः फिरौण् रजन्याम् उत्थितो तस्य दासा ३०
मिस्रीयलोकाश्च मिसरि भृशं रुरुदुः, यतो यस्मिन्
गृहे नैको मृतस्तादृशं गृहं नासीत्।

३१ तदानीं रजन्यामेव फिरौण् मूसां हारोणञ्चाहूय
जगाद, यूयम् इस्रायेलः सर्व्वे वंशा उत्थाय मम लो-
कानां मध्यात् वहिर्भवत, वहिर्भूत्वा च युष्माकं वाक्या-
३२ नुसारतो परमेश्वरं सेवध्वम्। अपरं युष्माकं वाक्या-
नुसारात् मेषमजान् सर्व्वान् गवादिपशूंश्च आदाय
३३ गच्छत, मामाशिषं गदत। तदानीं इस्रायेल् वंशा
यथा तूर्णं देशात् यान्ति, मिस्रिभिरित्युद्योगश्चक्रे,
३४ यतस्तैरुक्तम् वयमपि सर्व्वे मृतकल्पाः। ततो लोकाः
किण्वमिश्रणात् पूर्व्वं, निजं निजं मिश्रितं गोधूमचूर्णं
३५ वसनेन बद्ध्वा स्कन्धे जगृहुः। अपरं इस्रायेलो वंशो
मूसावाक्यानुसारात् मिस्रिभ्यः स्वर्णपात्ररूप्यपात्राणि
३६ वसनानि च याचित्वा जगृहुः। परमेश्वरो मिस्रिणां
दृष्टेस्तान् अनुग्रहभाजनानि कृतवान्, तस्मात् ते तेषां
प्रार्थनानुसारात् तेभ्यस्तानि ददुः। इत्थं ते मिस्रिणां
धनादि जहुः।

३७ तदानीम् इस्रायेलः सन्ताना बालकान् विहाय
षट्लक्षाधिक पुमांसः पद्ब्रजेन रामिषेषः सुक्कोतं प्रति
३८ यात्रां चक्रुः। तेन विदेशीया बहवो लोका मेषगवादयो
३९ बहुपशवश्च तैः सार्द्धं प्रतस्थिरे। अनन्तरं ते मिसर्देशात्
आनीते र्मिश्रितगोधूमचूर्णैः किण्वशून्यपिष्टकान् चक्रुः;

तन्मध्ये किण्वाभाव आसीत्, यतस्ते मिसरो दूरीभवन-
काले विलम्बकरणाशक्ताः स्वेषां कृते किञ्चिदपि खाद्यम्
आसादयितुं न शेकुः।

इस्रायेलो वंश स्त्रिंशदधिकचतुःशतवत्सरान् यावत् ४०
मिसर्देशे न्यवसत्। अनन्तरं त्रिंशदधिकचतुःशतवत्सरेषु ४१
व्यतीतेषु तस्मिन् दिने परमेश्वरस्य सैन्यानि मिसरो
वहि र्बभूवुः। परमेश्वरेण मिसर स्तेषां वहिः करणकृते ४२
सा यामिनी तान् प्रति महामान्या बभूव, परमेश्वरस्य
सा यामिनी च इस्रायेलवंशस्य पुरुषपरम्परां यावत्
अतीव मान्या भवति।

अपरं परमेश्वरो मूसां हारोणञ्च बभाषे, निस्तार ४३
पर्व्वण एषविधिः, कोपि विदेशी जन इदं न भक्ष्यति।
किन्तु रूप्येण क्रीतः सर्व्वोदासो यदि त्वक्छेदी भवति, ४४
तर्हि भोक्तुं शक्ष्यति। नो चेत् विदेशी वेतनजीवी ४५
दासो वा तद् भोक्तुं न शक्ष्यति। अन्यस्मिन् गृहे तद् ४६
भोक्ष्यध्वे, तस्य मांसस्य किञ्चिदपि गृहस्य वहि र्न
नेष्यथ, तदीयैकं कीकसमपि भग्नं माकार्ष्ट। इस्रायेलः ४७
सर्व्वेषां वंशानां समाजा इदं पर्व्व करिष्यन्ति। अपरं ४८
त्वया सार्द्धं प्रवासी कोपि विदेशी जनो यदि परमेश्व-
रस्य निस्तारपर्व्व पालयितुम् इच्छति, तर्हि स पुरुषः

परिवारेण सार्द्धं त्वक्छेदी सन् पर्व्व कर्त्तुम् आगच्छतु,
तेन स देशीयलोकस्य सदृशो भविष्यति ; किन्तु
४९ कोऽप्यच्छिन्नत्वक् तन्न भुंक्तां। अपरं देशजातो लोको
युष्माकं मध्ये प्रवसद्विदेशीयलोकान् प्रति विधिरेक
५० एव भविष्यति। तत इस्रायेलीयः सर्व्वो वंशस्तथैव कृत-
वान्, अर्थात् मूसाहारोणौ प्रति परमेश्वरस्य याज्ञा-
५१ सीत्, तदनुसारतएव चकार। इत्थं परमेश्वर स्तस्मिन्
दिने सैन्येन सार्द्धं इस्रायेलीयवंशं मिसरो देशात्
वहिः कृत्वानयत्।

## १३ त्रयोदशोऽध्यायः।

१ ईश्वरम् उद्दिश्य प्रथमजातस्य पवित्रीकरणं ३ मिसरो मोचनस्मरणार्थविधिः ११ ईश्वरम् उद्दिश्य प्रथमजातस्य पवित्रीकरणविवरणं १७ मिसरो यात्राकरणकाले यूषफः कीकसस्य वहनयनं २० दिवा मेघस्तम्भेन रात्रौ वह्निस्तम्भेन परमेश्वरस्य तेषां मार्गदर्शनञ्च।

१ अनन्तरं परमेश्वरो मूसां गदितवान्, प्रथमजात-
२ सन्तानान् मामुद्दिश्य पवित्रान् कुरु, यत इस्रायेलो
वंशमध्ये मनुजाः पशवो वा भवन्तु, तेषां प्रथमगर्ब्भस्य
सन्ताना मदीया भविष्यन्ति।

३ अनन्तरं मूसा लोकेभ्यः कथितवान्, यस्मिन्
दिने यूयं मिसरो दासत्वरूपगृहात् मुक्ता अभवत,
अर्थात् यस्मिन् दिने परमेश्वर स्तस्मात् स्थानात् निज-

बाहुबलेन युष्मान् बहिः कृतवान्, तद्दिनं स्मरणीयं,
तत्रापि किण्वयुक्तं पूपं मा भक्षत। यूयम् आवीव्मासस्य ४
दिनेऽस्मिन् बहिरभवत। पश्चात् यदा परमेश्वरो ५
त्वां किनानीय-हित्तीय-इमोरीय-हिव्वीय-यिबूषीय-
देशम् आनेष्यति, अर्थात् स तुभ्यं यं देशं दातुं तव
पूर्व्वपुरुषाणां समीपे शपथं चकार, तस्मिन् दुग्धमधु-
प्रवाहिनि देशे मासेऽस्मिन् त्वम् इदं पर्व्व पालयि-
ष्यसि। सप्ताहं यावत् किण्वशून्यपूपं खादिष्यसि, सप्तमे ६
दिने परमेश्वरम् उद्दिश्य महं करिष्यसि। सप्ताहं ७
किण्वशून्यपूपो भवतु, तव समीपे किण्वयुक्तपूपस्य दृष्टो
मा भवेत्, तव सर्व्वप्रदेशमध्ये किण्वदर्शनं न भवेत्।
तस्मिन् दिने त्वं निजपुत्रम् इति ज्ञापय, मिसरो मम ८
बहिर्भवनकाले परमेश्वरो मां प्रति यत् यत् कर्म्म कृत-
वान्, तस्य स्मरणार्थम् अयं व्यवहारो भवति। अपरम् ९
अयं विधिस्तव करस्य चिह्नस्वरूपः स्मरणार्थं नयनद्वय-
मध्यस्थानस्य भूषणस्वरूपो भविष्यति; परमेश्वरस्य
च व्यवस्था तव वदने स्थास्यति, यतः परमेश्वरः परा-
क्रमिकरेण मिसरत्वां बहिःकृतवान्। अतो रीत्यनु- १०
सारेण त्वं प्रतिवत्सरम् एतं विधिं पालयिष्यसि।
परमेश्वर स्तव त्वत्पूर्व्वपुरुषाणाञ्च समीपे यादृशं शपथं ११

हस्तवान् तदनुसारेण यदा किनानीयदेशे त्वां प्रवेश-
११ यिता युष्मभ्यं तं दास्यति, तदानीं त्वं निजान् पशून्
प्रथमजातसन्तानांश्च परमेश्वरार्थं पृथक् करिष्यसि,
ते सर्व्वे प्रथमजाताः पुंसन्ताना: परमेश्वरस्य भविष्यन्ति।
१३ अपरं गर्द्दभानां सर्व्वेषां प्रथमजातानां विनिमयेन मेष-
शावका दातव्याः, यदि विनिमयं न करोषि, तर्हि
तस्य ग्रीवां भंक्ष्यसि, तव सन्तानानां मध्ये मनुजानां
सर्व्वेषां प्रथमजातानां विनिमयः कर्त्तव्यः।
१४ पश्चात् तव पुत्त्रेण भविष्यति काले किमिदं? इति
त्वयि पृष्टे त्वं वदिष्यसि, यदा परमेश्वरो निजपराक्रमि-
करेणास्मान् मिसरोऽर्थात् दासत्वरूपस्थानात् वहिः
कृतवान्; फिरौणश्च अस्मान् कष्टेन यातुं निवारित-
१५ वान्; तदानीं परमेश्वरो मिसर्देशे मनुजानां पश्वादी-
नाञ्च सर्व्वान् प्रथमजातसन्तानान् अवधीत्, एतत्कार-
णात् अहं पुंल्लिङ्गसकलप्रथमजातान् परमेश्वराय
बलीन् ददामि; किन्तु मम वंशस्य प्रथमजातान्
१६ सर्व्वसन्तानान् मोचयामि। अयं विधिस्तव हस्तस्य
चिह्नस्वरूपो नेत्रद्वयमध्यस्थानस्य भूषणस्वरूपश्च भवि-
ष्यति, यतः परमेश्वरो बाहुबलेनास्मान् मिसर-
देशात् वहिरानयत्।

अपरं फिरौणा लोकेषु परित्यक्तेषु पिलेष्टीयदेशेन १७
यातुं लोकमार्गे स्थिते ईश्वरस्तेन मार्गेण तान् न गम-
यामास, यत ईश्वरो गदितवान्, तथा सति लोका
रणं विलोक्यानुतप्य मिसरं परावृत्य यास्यन्ति। अत १८
ईश्वरः सूफसागरस्य प्रान्तरे तान् वक्रवर्त्मना गमया-
मास; तत इस्रायेलो वंशः शृङ्खलवत् मिसरो वहिर-
भवत्। अपरं मूसा यूषफः कीकसानि सह निनाय, १९
यतः स इस्रायेलो वंशं भृशं शपथं कारयित्वा जगाद,
ईश्वरोऽवश्यं युष्मान् साक्षात् करिष्यति; यूयञ्च स्वैः सार्द्धं
मम कीकसानि स्थानादस्मात् नेष्यथ।

अनन्तरं ते सुक्कोतो यात्रां विधाय, एथमि अर्थात् २०
काननपार्श्वे शिबिरं स्थापयामासुः। परमेश्वरो दिवा २१
पथा नेतुं मेघस्तम्भे रजन्यां दीपनार्थं वह्निस्तम्भे
स्थित्वा तेषाम् अग्रेऽग्रे गतवान्, इत्थं दिवानिशं तान्
गमितवान्। स लोकानां सम्मुखात् दिवा मेघस्तम्भं २२
रजन्यां वह्निस्तम्भञ्च न दूरयामास।

## १४ चतुर्दशोऽध्यायः।

१ इस्रायेलीयलोकान् प्रति परमेश्वरस्य पथदर्शनं ५ फिरौण-सैन्यानां पश्चात् गमनं १० इस्रायेलीयलोकानां विलपनं १३ मूसाः सान्त्वनावाक्यं १५ परमेश्वरेण मूसाभिभाषणं १९ दूत-मेघस्तम्भयोः पश्चाद् वर्त्तनं २१ मूसाः समुद्रद्विधाकरणं २३ इस्रायेल्लोकानां पश्चात् मिस्रिणां गमनं २६ सागरे मिस्रिणां विनाशश्च।

१ अनन्तरं परमेश्वरो मूसां बभाषे, त्वं इस्रायेलीय-
२ वंशाय कथय, यूयं परावृत्य पीहहीरोतः पूर्व्वदिशि
मिग्दोलः सागरस्य च मध्ये बाल्सिफोनः सम्मुखे
शिविरं स्थापयत ; यूयं तस्याग्रभूमौ सागरस्य समीप-
३ एव शिविरं स्थापयत। यतः फिरौण् इस्रायेलो वंशं
उद्दिश्य कथयिष्यति, ते देशस्य मध्ये बद्धाः सन्ति काननेन
४ च रुद्धाः सन्ति। अपरं मया फिरौणो हृदये कठिने
कृते स युष्माकं पश्चात् धाविष्यति, ततः फिरौणा
तदीयसैन्यैश्च सम्मानम् प्राप्स्यामि, तेन परमेश्वरो-
ऽहमेवेति मिस्रिणो ज्ञास्यन्ति, तदा ते तथैव कृतवन्तः।
५ ततो लोकाः पलायिता इति वार्त्तायां मिस्रीय-
राजे विज्ञापितायां फिरौण स्वस्य दासानाञ्च मनांसि
लोकेष्वनुतापितानि बभूवुः, ते च कथयामासुः, कुतो
वयम् एतादृशं कृतवन्तः? दासत्वात् मुक्तं इस्रायेल् वंशं
६ कुत स्त्यक्तवन्तः? तदानीं राजा निजरथं सज्जयामास,

निजलोकान् सङ्गिनः कृतवान्। अपरं मनोनीताः ७
षट्शतानि रथा मिस्रियाणां सर्व्वे रथाः प्रतिरथं योद्धृन्
जग्राह। तदा परमेश्वरेण मिस्रिराजस्य फिरौणो ८
हृदये कठिने कृते स इस्रायेल्वंशस्य पश्चाद् अधावत्,
अपरम् इस्रायेलः सन्ताना महाबलेन गतवन्तः।
किन्तु मिस्रीया अर्थात् फिरौणः सर्व्वहया रथा अश्वा- ९
रूढाः सैन्यानि च तेषां पश्चात् जग्मुः, यदा ते सागरस्य
तीरे बाल्सिफोनः सम्मुखे पीहहीरोतः समीपे शिविरं
स्थापयन्ति तदानीं ते तेषां समीप उपतस्थुः।

तत इस्रायेलः सन्तानाश्चक्षुरुन्मील्य फिरौण् निकट- १०
वर्त्ती मिस्रीयाः लोकाश्च पश्चात् आगच्छन्तीति
विलोक्य तेऽतीव बिभ्युः, इस्रायेलो वंशेन परमेश्वरम्
प्रति प्रार्थितं। अपरं ते मूसां भाषितवन्तश्च मिसरे ११
किं श्मशानं नासीत्, तत्कारणात् किमस्मान् प्रान्तरे
मारयितुम् आनीतवान्? अस्माभिः साद्धम् इदृग् व्यव-
हृत्य अस्मान् मिसरः कुतो बहिः कृतवान्? अस्मान् १२
त्यक्तुम् आदिश, वयं मिस्रिणः सेवामहे, यतः प्रान्तरे
मरणात् मिस्रिणां सेवनम् अस्माकम् मङ्गलं एतां
कथां वयं किं मिसरि तुभ्यं न कथितवन्तः?

अनन्तरं मूसा लोकान् अवादीत्, यूयं मा वि- १३

भीत, स्थिरीभवत, परमेश्वरो युष्मान् अद्य कथम्
उद्धारयति, तत् पश्यत । यूयमद्य मिस्रिणः पश्यथ,
१४ इति सत्यं, किन्तु पुनः कदापि न द्रक्ष्यथ। परमेश्वरो
युष्मत्कृते योत्स्यति, यूयं स्थिरास्तिष्ठत ।
१५ अनन्तरं परमेश्वरो मूसां जगाद,त्वं मां कुत आ-
१६ क्रयसि, इस्रायेलो वंशम् अग्रं गन्तुं वद। अपरं त्वं
निजयष्टिं गृहीत्वा निजकरं सागरोपरि प्रसार्य्य तं
द्विभागं कुरु, तत इस्रायेलो वंशः सागरस्य मध्येन
१७ शुष्कभूमौ यास्यति। अपरं पश्याहं मिस्रिणाम्
अन्तःकरणानि कठिनानि करिष्यामि, ते च तेषां
पश्चात् पश्चात् यास्यन्ति, ततोऽहं फिरौणस्य सर्व्व-
सैन्यानां रथानां हयारूढानां समक्षं सम्मानं प्राप्स्यामि।
१८ फिरौण् तस्य रथानां तस्य हयारूढानां समक्षं
मया सम्माने प्राप्ते परमेश्वरोऽहमेवेति मिस्रीयाः सर्व्वे
लोका ज्ञास्यन्ति।
१९ तदानीम् इस्रायेलो वंशस्य सैन्याग्रे गामीश्वरस्य
दूतस्तेषां पश्चात् जगाम, मेघस्तम्भस्तेषां सम्मुखात्
२० गत्वा तेषां पश्चात् स्थितवान्। स मेघस्तम्भो मिस्रीय-
लोकानाम् इस्रायेलो वंशस्य चोभयशिविरमध्ये तस्थौ,
तेन स तान् प्रति मेघोऽन्धकाररूपो बभूव; किन्तु

रजन्यां इस्रायेलो वंशं प्रति दीप्तिं कृतवान्, इति कारणात् कृष्णायां रजन्यां एको निवहोऽन्यनिवहस्य समीपं गन्तुं न शशाक।

अनन्तरं मूसाः सागरोपरि स्वकरं प्रसारयामास, २१
ततः परमेश्वरः तस्यां कृष्णायां यामिन्यां प्रबलं पूर्व्वीयवायुं वाहयाञ्चकार, सागरं परावर्त्तयाञ्चकार सागरं
शुष्कं चकार च, तोयानि च द्विभागीबभूवुः। तत २२
इस्रायेलो वंशाः शुष्केण पथा सागरस्य मध्येन गतवन्तः, अपरं तेषां दक्षिणे वामे च तोयं प्राचीररूपं बभूव।

अनन्तरं मिस्रीया अर्थात् फिरौणः सर्व्वे हया २३
रथा हयारोहाश्च धावन्तः तेषां पश्चात् सागरस्य
मध्यं प्रविविशुः। अपरं रजन्याः शेषप्रहरे परमेश्वरो २४
वह्निमेघयोस्तम्भाभ्याम् मिस्रीयसैन्यम् अवलोक्य तान्
व्याकुलान् चकार। तेषां रथचक्रे मोचिते तेऽतिकष्टेन २५
रथान् चालयामासुः; ततो मिस्रीयलोका उक्तवन्तो वयम् इस्रायेलो वंशात् पलायामहै, यतः परमेश्वरो मिस्रिणां प्रतिकूलं तेषां पक्षे युध्यति।

अनन्तरं परमेश्वरो मूसां जगाद, त्वं सागरोपरि २६
निजकरं प्रसारय, तेन मिस्रिणां तेषां रथानां हयानां हयारोहाणाञ्चोपरि पुनरपि तोयम् आग-

२७ मिष्यति। तदा मूसाः सागरोपरि स्वकरं प्रसारितवान्;
ततः प्रातःकाले जाते सागरः समानो भवितुम् आर-
भत, तेन मिस्रीयास्तस्य सम्मुखात् पलायन्त; तथापि
२८ परमेश्वरः सागरस्य मध्ये तान् निरक्षिपत्। फलत आपः
परावृत्य तेषां रथान् हयारोहांश्च छादयामास, तेन
फिरौणो यानि सैन्यानि तेषां पश्चात् सागरं प्रविष्टानि,
२९ तेषाम् एकोपि नावशिष्टः स्थितवान्। किन्त्विस्रायेलो
वंशः शुष्कपथेन सागरस्य मध्येन गतवान्, जलन्तु
३० तेषां वामे दक्षिणे च प्राचीररूपं बभूव। इत्थं तद्दिने
परमेश्वरो मिस्रीयाणां करेभ्य इस्रायेलो वंशं रक्षित-
वान्, इस्रायेलो वंशो मिस्रीयान् सागरस्य तटे मृतान्
३१ ददृशुः। परमेश्वरो मिस्रीयाणां मध्ये यदाश्चर्यपरा-
क्रमं प्रकाशयामास, तत् इस्रायेलो वंशो ददर्श, तेन
लोकाः परमेश्वरात् परिभीय परमेश्वरे तस्य दासे
मूसे च व्यश्वसन्।

१५ पञ्चदशोऽध्यायः।

१ मूसागीतं २० तस्य गानं २२ तोयाभावः २३ माराख्याने
तिक्ततोयप्राप्तिः काष्ठेन तस्य मिष्टत्वं २७ एलीमख्याने
शिविरस्थापनञ्च।

१ अनन्तरं मूसा इस्रायेलो वंशश्च परमेश्वरमुद्दिश्य
गीतमिदं गीत्वा अगदुः—

१ अहं गीतं प्रगास्यामि समुद्दिश्य परेश्वरं ।
स्वकीयो महिमा तेन स्वयमेव प्रकाशितः ।
हयारोहा हयाश्चैव निक्षिप्ताः सागराम्भसि ।
२ परेशो मे बलं गीतं परित्राता च मेऽभवत् ।
महीश्वरः स तस्मात्तं प्रशंसिष्याम्यहं ध्रुवम् ।
स ईशो मम तातस्य तत् वदिष्यामि तद्गुणान् ।
३ विरोधाः परमेशो यः स एव कुरुते रणम् ।
४ फिरौणो रथसैन्यानि सागरे क्षिप्तवान् स हि ।
तन्मनोनीतसेनान्यो निमग्नाः सूफि सागरे ।
५ आच्छादितेषु लोकेषु गभीरतोयराशिना ।
पाषाणादिव ते सर्व्वे तोयानामगमन् तलम् ।
६ बलात्ते दक्षिणो हस्तः परेश गौरवं गतः ।
परेश दक्षिणो हस्तस्तेऽचूर्णयत् रिपून् भृशं ।
७ त्वद्विरुद्धमतान् लोकान् सुमहिम्ना व्यनाशयः ।
त्वत्प्रेषितेन कोपेन नालवत् भक्षितास्तु ते ।
८ त्वत्क्रोधभवनिश्वासात् तोयं राशिरजायत ।
अभवन् सेतुवत् स्रोतो गभीरं कठिनं पयः ।
९ तेनोक्तं रिपुभिर्वेगात् धरिष्यामो हि तान् वयं ।
कामान्नः पूरयिष्यामो विभज्याहाय लुण्ठितम् ।
खड्गान् निष्कोष्य नो हस्ता नाशयिष्यन्ति तान् जनान् ।

१० निश्वासमुच्छादिता स्तेतु त्वया निमग्नकं जले।
सीसकानीव ते सर्व्वे गभीराम्बुतलं गताः।
११ मध्येदेवगणं कोऽस्ति त्वत्तुल्यः परमेश्वर।
आदर्शनीयः पवित्रत्वात् स्तवनैश्च भीतिदायकः।
आश्चर्य्यकर्म्मकारी च त्वत्तुल्यः कोऽत्र विद्यते।
१२ स्वकीयदक्षिणे हस्ते त्वया शीघ्रं प्रसारिते।
सर्व्वं रिपुगणं तूर्णं जग्रास मेदिनी स्वयम्।
१३ कृपया परिमोच्य त्वं लोकान् स्वान् गमयस्यपि।
त्वत्पवित्रनिवासाय स्वबलात् तान् नयस्यपि।
१४ इति श्रुत्वेतरे लोकाः परिप्राप्स्यन्ति साध्वसं।
उद्विग्नत्वं फिलिष्टीया जना गंस्यन्ति निश्चितं।
१५ चमत्कृता भविष्यन्ति नृपाः सर्व्वे इदोमियाः।
कम्पयुक्ता भविष्यन्ति मोयाबी बलवत्तराः।
द्रवत्वं परिप्राप्स्यन्ति किनान्देशनिवासिनः।
१६ यावत्कालं जना एते नदीपारं व्रजन्ति न।
तावत् तान् साध्वसाविष्टे अनुजानात्यविक्रमाः।
परमेश्वर ते क्रीताः पारं यावत् न यान्ति हि।
तावत् दोर्व्वलतश्चे ते स्थास्यन्ति अश्मवत् स्थिराः।
१७ स्वयं वस्तुं परेश त्वं यत् स्थानं निर्म्मितं पुरा।
यच्च स्थानं पवित्रं ते कराभ्यां स्थापितं भुवि।

तत्राधिकृतशैले त्वं तान् जनान् वासयिष्यसि।
१८ सर्व्वकाले परेशेन राजत्वं प्रकरिष्यते।
१९ फिरौणोऽश्वा रथाः सिन्धुं प्राविशन् सादिनस्तथा।
तेषामुपरि सामुद्रं परेश तोयमानयत्।
इस्रायेलोयसन्ताना ये ते शुष्केण वर्त्मना।
पारावारस्य मध्येन गमनं चक्रिरे पदैः।

अनन्तरं हारोणो भगिनी मरियम् भविष्यद्वक्त्री २०
कराभ्यां मृदङ्गं गृहीतवती, ततोऽन्या योषितश्च सर्व्वा मृद-
ङ्गान् गृहीत्वा नृत्यं कुर्व्वत्यस्तस्याः पश्चात् वहिर्बभूवुः।
तदानीं मरियम् ताश्च इदं गीतं गातुं कथयामास, २१

परेश्वरं समुद्दिश्य यूयं गीतं प्रगायत।
स्वकीयो महिमा तेन स्वयमेव प्रकाशितः।
हयारोहा हयाश्चैव निक्षिप्ताः सागराम्भसि।

अनन्तरं मूसा इस्रायेलो वंशं सूफसागरात् आनी- २२
तवान्, ततस्ते शूर्प्रान्तरस्य दिशं गतवन्तः; प्रायेण
दिनत्रयं प्रान्तरं गत्वा तोयं न प्रापुः।
पश्चात् तेषु माराम् उपस्थितेषु तिक्तताकारणात् २३
मारायाः पानीयं पातुं न शेकुः, तत्कारणात् तस्य नाम
मारा तिक्तेति चक्रुः। अतो लोकै र्मूसो विरुद्धं २४
वाग्युद्धं कृत्वा कथितं, वयं किं पास्यामः? तेन स परमे- २५

स्वरम् उद्दिश्य प्रार्थितवान्, तदा परमेश्वर एकजातीयं काष्ठं तं दर्शयामास, तदादाय मूसा जले निक्षिप्तवान्, ततस्तोयं मधुरं बभूव। तत्र स्थाने परमेश्वरस्तेषां कृते विधिं व्यवस्थाञ्च निरूपयामास, पुनस्तान् परीक्ष्य
२६ गदितवान्, यदि यूयं निजप्रभोः परमेश्वरस्य कथायां मनांसि निधत्थ, तस्य दृष्टौ यदुचितं तदेव कुरुथ, तस्याज्ञायां मनांसि निधत्थ, तदीयां सकलव्यवस्थाञ्च पालयथ, तर्हि मिस्रीयलोकान् अहं यान् यान् रोगान् भोजितवान्, तान् युष्मान् न भोजयिष्यामि, परमेश्वरोऽहमेव युष्माकम् आरोग्यकारः।
२७ अनन्तरम् एलीमं तेषूपस्थितेषु तत्र द्वादश प्रस्रवणानि सप्ततिः खर्ज्जूरपादपाश्चासन्, तस्मात् ते तोयप्रस्रवणसमीपे शिविराणि स्थापयामासुः।

## १६ षोडशोऽध्यायः।

१ आहाराभावात् इस्रायेलो वंशस्य कलहः ४ खाद्यं वर्षम् इस्रायेलस्य प्रतिश्रुतिः ९ लोकान् प्रति मूसा आज्ञापनम् ईश्वरस्य तेजःप्रकाशनं १३ भक्ष्यपक्षिणां प्रेषणं मान्नागमनं १६ आहारस्य परिमाणनिरूपणं २२ षष्ठ दिनाय विशेष निरूपणं २७ विश्रामदिने आहारवर्षणाभावः ३२ पात्रे मान्नारक्षणं।

१ अपरम् मिस्रदेशाद्यात्रानन्तरं द्वितीयमासस्य पञ्चदश दिने इस्रायेल् वंशीय समाजस्य सर्व्वे लोका एलीमो यात्रां विधाय एलीम्सीनयोरुभयो र्मध्यवर्त्तिनं सीन्-

प्रान्तरम् उपस्थितवन्तः। तदानीम् इस्रायेल् वंशीय २
समाजस्य सर्व्वे लोका मूसाहारोणयोः प्रतिकूलं प्रान्तरे
अवदन्। अपरम् इस्रायेलो वंशजास्तौ कथयामासुः, ३
वयं यदा मांसानां पाकपात्रनिकटे समुपविश्य तृप्तिं
यावत् अन्नम् अभुञ्ज्म, हाय तदा यदि वयं मिस-
रीये परमेश्वरस्य हस्तेन अम्रियामहि; युवाम् एतत्
समाजस्य सर्व्वलोकान् क्षुधया मारयितुम् अस्मान्
बहिः प्रान्तरम् आनयतम्।

तदा परमेश्वरो मूसामवदत्, पश्याहं युष्मत्कृते ४
आकाशात् खाद्यद्रव्याणि वर्षिष्यामि, ततो लोका बहि-
र्गत्वा दैवसिकनिरूपितपरिमाणानुसारेण खाद्यानि
संग्रहीष्यन्ति, तेन ते मम व्यवस्थया कुर्व्वन्ति न वेति
तान् परीक्षिष्ये। षष्ठदिने ते यद् आनेष्यन्ति, तस्मिन् ५
पक्वे दिनं दिनं यत् संग्रहीष्यन्ति, तस्य द्विगुणं भवि-
ष्यति। ततो मूसाहारोणौ इस्रायेलः सर्व्ववंशान् अगदतां, ६
परमेश्वरो यत् युष्मान् मिसरो बहिरानयत्, तत्
युष्माभिः सायंकाले ज्ञास्यते। अपरं प्रातःकाले यूयं ७
परमेश्वरस्य महिमानं द्रक्ष्यथ, परमेश्वरं प्रति युष्माकं
यत् वाग्युद्धं स तत् अशृणोत्, आवां कौ यत् यूयम्
आवयोर्विरुद्धं वाग्युद्धं कुरुथ। पश्चात् मूसः कथित- ८

वान्, परमेश्वरः सायंकाले भोजनार्थं युष्मभ्यं मांसानि दास्यति, प्रातःकाले तृप्तिपर्य्यन्तं खाद्यानि च दास्यति, परमेश्वरं प्रति युष्माकं यो वाक्यव्ययः स तं श्रुतवान्, आवां कौ ? आवयो र्विपरीतं नहि, किन्तु परमेश्वरस्य विपरीतं युष्माकं वाक्यव्ययो भवति ।

९ अपरं मूसा हारोणं बभाषे, त्वम् इस्रायेलवंशीय समा-
जस्य निखिल लोकान् वद, यूयं परमेश्वरस्य सम्मुखम्
१० आगच्छत, स युष्माकं वाक्यव्ययं श्रुतवान् । हारोण्
इस्रायेल्वंशस्य समाजम् इति वदतीत्यनन्तरं तैः प्रान्तरं
प्रति दृष्टिः कृता, तदा मेघस्तम्भस्य मध्ये परमेश्वरस्य
तेजो दृष्टमभूत् ।

११ परमेश्वरो मूसां गदितवान्, अहम् इस्रायेलो
१२ वंशस्य वाक्यव्ययम् अश्रौषम् । त्वं तेभ्यः कथय, यूयं सायं-
काले मांसानि भक्षिष्यथ, प्रातःकाले खाद्यद्रव्यैस्तृप्तिं
प्राप्स्यथ, तेनाहं यथा युष्माकं प्रभुः परमेश्वर इति
१३ ज्ञास्यथ । अनन्तरं सन्ध्यायां वर्त्तक पक्षिण उपस्थित्य
शिविरस्थानं व्याप्नुवन्, प्रातःकाले च सैन्यस्थानस्य चतु-
१४ र्दिक्षु तुषाराः पेतुः । अनन्तरं पतिततुषारेषूर्द्धं गतेषु
प्रान्तरोपरि भूमौ क्षुद्रा गोला नीहाराइव क्षुद्रद्रव्याणि
१५ पतितान्यतिष्ठन् । ततः परम् इस्रायेलः सन्तानास्तानि

विलोक्य परस्परं जगदुः, मान् हु ? किमेतत् ? यतः किं
तदिति ते न विविदुः। ततो मूसाः कथितवान् परमे-
श्वरो युष्मभ्यं द्रव्यमेतत् भोक्तुं दत्तवान्।

तदानीं परमेश्वरस्याज्ञानुसारात् युष्माकम् एकैको १६
जनो निजभोजनशक्तिं विज्ञाय तत् संगृह्णातु, अर्थात
एकजनकृते एकम् ओमरं युष्माकं प्राणिनां संख्यानुसा-
रेण निजनिजदूष्ये स्थितानां लोकानां कृते तत्संगृह्णीत।
तत इस्रायेलो वंश तथैव कृतवान्, कश्चिद् अधिकं, १७
कश्चिद् अल्पं समचिनोत्। पश्चात् ते ओमेरेण तस्मिन् १८
परिमिते, येनाधिकं संगृहीतं, तस्याधिकं नाभवत्,
येन चाल्पं संगृहीतं तस्याल्पं नाभवत्, इत्थं ते भोजन-
शक्त्यनुसारेण संजगृहुः। अनन्तरं मूसाः कथितवान्, १९
युष्माकं कोऽपि प्रातःकालकृते तस्य किञ्चिदपि न स्थाप-
यतु। किन्तु ते मूसावाक्यं न गृहीत्वा केचित् प्रातः- २०
कालकृते किञ्चित् किञ्चित् स्थापयामासुः; तदा तत्र
कीटा जज्ञिरे, दुर्गन्धश्च बभूव; ततो मूसास्तेभ्यः क्रुद्ध-
वान्। इत्थं प्रत्यहं प्रातःकाले ते स्वस्वभोजनशक्त्यनुसारेण २१
तत् संगृहीतवन्तः; किन्तु प्रखरे रौद्रे सति तद्
द्रवीबभूव।

अनन्तरं षष्ठदिने परिमितात् द्विगुणम् अर्थात् २२

एकैको जनो द्वे द्वे ओमरद्रव्ये संगृहीतवान्; तदा
समाजस्य अधिपतयश्च आगत्य मूसां ज्ञापयामासुः।
२३ ततो मूसा तेभ्यः कथितवान्, परमेश्वर इत्थमाज्ञाप-
यत्, श्वः परमेश्वरस्य पवित्रो विश्रामवारो भविष्यति,
तस्मात् युष्माकं यद् भर्ज्जनीयं तद् भर्ज्जत, यच्च पच-
नीयं तत् पचत, अवशिष्टद्रव्यञ्च प्रातःकालार्थं स्थाप-
२४ यत। तेन ते मूसाज्ञानुसारेण प्रातःकालपर्य्यन्तं तत्
स्थापयामासुः; किन्तु तच्च दुर्गन्धं न बभूव, कीटाश्च
२५ न जज्ञिरे। पश्चात् मूसाः कथयामास, यूयमद्य तत्
भुङ्ग्ध्वं, यतोऽद्य परमेश्वरस्य विश्रामवारः, अद्य प्रान्तरे
२६ किञ्चित् न लप्स्यध्वे। यूयं षट् दिनानि तत् संग्रही-
ष्यथ; किन्तु सप्तमे दिने, अर्थात ईश्वरस्य विश्रामवारे,
२७ किञ्चिदपि न लप्स्यथ। तथापि कश्चित् कश्चित् सप्तम-
२८ दिनेपि तत् संग्रहीतुं जगाम; किन्तु किञ्चिदपि न
२९ प्राप्तवान्। ततः परमेश्वरो मूसां जगाद, यूयं मदीयाज्ञां
विधिञ्च पालयितुं कतिकालान् न मंस्यथ? पश्यत
परमेश्वरो युष्मभ्यं विश्रामदिनं दत्तवान्, अतः षष्ठ-
दिने दिनद्वयोपयुक्तं खाद्यं दत्तवान्, तस्मात् युष्माकं
कोपि जनः सप्तमदिने स्वस्वस्थानात् न बहिर्भूत्वा
३० स्वस्वस्थाने तिष्ठतु। तदानीं लोकाः सप्तमदिने विश्रा-

लवन्तः। अपरम् इस्रायेलः वंशास्तस्य खाद्यस्य ३१
नाम मान्ना इतवन्तः, सा मान्ना धन्याकाकृतिः शुक्ल-
वर्णा तस्या रसो मधुमिश्रितपिष्टकवत् आसीत्।
ततःपरं मूसा गदितवान्, परमेश्वर एतद् आज्ञां- ३२
पितवान्, स मिसरो युष्मानानयनकाले प्रान्तरस्य मध्ये
यद्भक्ष्यं युष्मान् भोजितवान्, तद् यथा युष्माकं पुरुष-
परम्परया दर्शिष्यते, तदर्थं तेषां कृते ओमरैकपरिमाणां
मान्नां स्थापयत। तदानीं मूसा हारोणम् अवादीत्, ३३
त्वम् पात्रमेकं गृहीत्वा एकोमरपरिमाणां मान्नां
पूरयित्वा परमेश्वरस्य सम्मुखे निधेहि, सा युष्माकं
भाविपुरुषाणां निमित्तं स्थापयिष्यते। तदानीं हारोण् ३४
मूसां कथितायाः परमेश्वरस्याज्ञाया अनुसारेण साक्षि-
पेटकस्य समीपे स्थातुं तां स्थापितवान्। इस्रा- ३५
येलो वंशो निवासदेशोपस्थितिं यावत् चत्वारिंशत्
वत्सरान् तां मान्नां भुक्तवान्, किनान्देशस्य सीमोप-
स्थितिं यावत् तां खादितवान्। एक ओमर् ऐफा- ३६
दशमांशः।

१७ सप्तदशाध्यायः।

१ रिफीदीमि तोयाभावात् लोकानां कलहः ८ अमालेक् लोकानां पराजयः १५ परमेश्वरनिस्सि इति वेदिनामकरणं।

अनन्तरम् इस्रायेलवंशीयसमाजस्य सर्वे लोका सिन्- १

पितपथेन परमेश्वरस्याज्ञानुसारेण सीन्प्रान्तरात् यात्रां
कृत्वा रिफीदीमं गत्वा शिविरं स्थापयामासुः; किन्तु
२ तत्र स्थाने लोकानां पानार्थं तोयाभाव आसीत्। अतो
लोका मूसा सार्द्धं वाक्कलहं कृत्वा कथयामासुः, अस्मभ्यं
पानीयं देहि यत् वयं पास्यामः; ततो मूसः कथितवान्
यूयं कुतो मया सार्द्धं वाग्मि युध्यथ। कुतः परमेश्वरं
३ परीक्षध्वे। तदानीं लोका तत्र स्थाने पानीयाभावात्
तृषार्त्ताः सन्तो वाग्युद्धं कृत्वा मूसं कथितवन्तः, त्वम्
अस्मान् अस्माकं सन्तानान् पशूंश्च पिपासया मारयितुं
४ मिसरदेशात् कुत आनीतवान्। ततो मूसाः परमेश्वरं
प्रार्थयमानः कथितवान्, एतेषां लोकानां कृते किमहं
करिष्यामि। ते मां प्रायेण पाषाणं पातयित्वा मारयि-
५ तुम् उद्यताः। तदानीं परमेश्वरो मूसां बभाषे, त्वं यया
नदीमिम् आहन्तः, तां यष्टिं करेण गृहीत्वा कतिपय-
प्राचीनान् सङ्गिनः कुर्व्वन् इस्रायेलो वंशस्य लोकानाम्
६ अग्रे याहि। पश्चादहं होरेवपर्व्वतस्योपरि तव सम्मुखे
स्थास्यामि, त्वं तं शैलम् आहनिष्यसि, तेन तस्मात्
तोये निर्गते लोकास्तत् पास्यन्ति। तदानीं मूसा
इस्रायेलो वंशस्य प्राचीनानां दृष्टौ तथैव कृतवान्।
७ अपरं तत्र स्थाने इस्रायेलो वंशस्य विवादकारणात्

परमेश्वरोऽस्माकं मध्ये विद्यते नवेति वदन्तः परमेश्व-
रस्य परीक्षणकारणाच तस्य स्थानस्य नाम मसा
(परीक्षणं) मिरीबा (विवाद) इति कृतवान्।

तदानीम् अमालेक्लोका रिफीदीमम् आगत्य ८
इस्रायेलो वंशैः सार्द्धम् अयुध्यन्, तदा मूसा यिहोशूयं ९
गदितवान्, त्वम् अस्माकं मध्यात् मानुषान् मनोनी-
तान् कृत्वा गृहाण अमालेको लोकैः सार्द्धं योद्धुं याहि;
अहम् ईश्वरीयां यष्टिं करेण गृहीत्वा पर्व्वतस्य शिखरे
स्थास्यामि। तदा यिहोशूयो मूसाज्ञानुसारात् अमा- १०
लेको लोकैः सार्द्धम् अयुध्यत्, मूसाहारोण् हूर पर्व्वतस्य
शृङ्गोपरि समारुहन्। किन्तु यदा यदा मूसा निज- ११
करौ ऊर्द्ध्वीकरोति, तदा तदेस्रायेलो वंशो जयति,
किन्तु निजकरयोः अवरोहितयोः, अमालेको लोकाश्च
जयन्ति। अपरं मूसः करयो र्गुर्व्वी र्भूतयोः तैरेकं पाषा- १२
णम् आनीय तस्याधः स्थापितं; तदा मूसा तस्योपरि
समुपविष्टवान्, ततो हारोण् हूर् च द्वावेको जन एक-
दिशि तदन्यजनोऽन्यदिशि तस्य करावुत्थाप्य धृतवन्तौ
तेन रवेरस्ततापर्य्यन्तं तस्य करौ स्थिरीभूय स्थित-
वन्तौ। अतएव यिहोशूयोऽमालेकं तस्य लोकांश्च १३
खड्गेन पराजयत्।

१४ अनन्तरं परमेश्वरो मूसां गदितवान्, एतां कथां
स्मरणार्थं पुस्तके लिख, यिहोशूयः कर्णगोचरे तत् पठ
च; अहम् आकाशस्याधोभागात् अमालेकः स्मरणं
१५ लोप्स्यामि। अनन्तरं मूसा एकां वेदिं निर्माय तस्या
नाम यिहोवा निषि (परमेश्वरो मम ध्वजस्वरूपः) इति
१६ कृतवान्। अपरं पुरुषपरम्परां यावत् अमालेका सार्द्धं
परमेश्वरस्य संग्रामो भविष्यतीमां कथां ध्वजे लेखितुं
आज्ञापयामास।

## १८ अष्टादशोऽध्यायः

१ मूसासमीपं तस्य भार्य्यापुत्रश्वशुराणामागमनं ७ तेषां साक्षात्कारः तेषां यज्ञश्च १२ मूसां प्रति यिथ्रोसुमन्त्रणा २० यिथ्रोस्वदेशगमनञ्च।

१ ईश्वरो मूसां प्रति निजलोकेस्रायेलो वंशं प्रति
च कर्म्माण्येतानि कृतवान्; अपरं मिसरो देशाच्च
इस्रायेलो वंशं बहिः कुर्व्वन् आनीतवान्, एताः
२ सकलाः कथाः श्रुत्वा मूसः श्वशुरो मिदीयनो याजको
यिथ्रोः मूसा निजगेहं प्रहितां तस्य जायां सिप्पोरां
३ तस्या द्वौ पुत्रौ च सङ्गे गृहीतवान्। एतयो द्वयोः
पुत्रयो रेकस्य नाम गेर्शोम् (प्रवासे विदेशी) यतः
स कथितवान्, अहमितरस्मिन् देशे विदेशी भूतवान्।
४ अन्यस्य नामधेयम् इलीयेषर् (ईश्वरो ममोपकर्त्ता) यतः

स कथितवान्, मम पितुरीश्वरो ममोपकर्त्ता भवन्
फिरौणः खड्गात् माम् उद्धृतवान्। पश्चात् मूसाः श्वशुरो ५
यिथ्रो मूसः सुतौ तौ द्वौ जायाञ्च गृहीत्वा प्रान्तरे
अर्थात् ईश्वरस्य पर्व्वते यस्मिन् स्थाने मूसाः शिबिरं स्था-
पितवान्, तत्र स्थाने तस्य समीपम् आजगाम। अपरञ्च ६
मूसे कथितवान्, अहं तव श्वशुरो यिथ्रोः तव जाया च
तया सार्द्धं तव द्वौ सुतौ च तव समीपम् आगतवन्तः।
तदानीं मूसा निजश्वशुरं साक्षात् कर्त्तुं बहिर् गत्वा ७
तं प्रणम्य चुचुम्बे; ततः परस्परं मङ्गलं पृष्ट्वा ते दूष्यं
प्रविविशुः। अनन्तरं परमेश्वर इस्रायेलो वंशकारणात् ८
फिरौणं प्रति मिस्रीयान् प्रति च किं किं कृतवान्,
वर्त्मनि तान् प्रति कीदृक् परिश्रमो ऽभूत्, पर-
मेश्वरश्च केन प्रकारेण तान् लोकान् उद्धृतवान्
एताः सकलाः कथा मूसा निजश्वशुरं ज्ञापयामास।
तत्र परमेश्वरो मिस्रीयाणां करेभ्य इस्रायेलो वंशम् ९
उद्धृत्य तेषां मङ्गलं कृतवान्, एतेषां कृते यिथ्रो ऽती-
वाह्लादितो बभूव। अपरं स कथितवान् यः परमे- १०
श्वरो मिस्रीयाणां फिरौणश्च करेभ्यो युष्मान् उद्धृतवान्
स धन्यः। परमेश्वरः सर्व्वदेवताभ्यो महान् इत्यहम् ११
इदानीम् ज्ञातवान्; यतस्ते यस्मिन् अभिमानं कृतवन्तः

१२ तस्मिन् स तेषाम् उपरि जयी बभूव। अनन्तरं मूसः
श्वशुरो यिथ्रोः परमेश्वरम् उद्दिश्य होमं नैवेद्यञ्च
कृतवान्; अपरं हारोण् इस्रायेलो वंशस्य प्राचीन-
लोकाश्च आगत्य परमेश्वरस्य सम्मुखे मूसः श्वशुरेण
सार्द्धं भोजनं चक्रुः।
१३ परेऽहनि मूसा लोकानां विचारं कर्त्तुम् उपविवेश,
तदा लोकाः प्रातःकालम् आरभ्य सन्ध्यां यावत् तस्य
१४ सम्मुखे स्थितवन्तः। ततो लोकान् प्रति यद्यत् कृतवान्,
मूसः श्वशुरः तद् विलोक्य कथयामास, त्वं लोकैः सार्द्धं
कीदृक् व्यवहरसि? त्वं कुत एकाकी उपविशसि? सर्व्वे
लोका आ प्रातःकालात् सन्ध्यां यावत् तव समीपे कुत-
१५ स्तिष्ठन्ति? ततो मूसा निजं श्वशुरं कथितवान्, लोका
ईश्वरस्य विचारं प्रष्टुं मम सन्निधिम् आगच्छन्ति, तेषां
कस्मिंश्चित् विवादे जाते मम समीपम् आगच्छन्ति;
१६ ततो वादिप्रतिवादिनो विचारयाम्यहम्, अपरम्
१७ ईश्वरस्य सर्व्वा विधिव्यवस्था लोकान् ज्ञापयामि। अन-
न्तरं मूसः श्वशुरः कथयामास, त्वं यत् करोषि, तत्
१८ भद्रं नहि। त्वं तव सङ्गिनो लोकाश्चोभये क्षीणा भवि-
ष्यथ, यत इदं कार्य्यं त्वदीयशक्तितो गुरुतरं; एतत्
१९ त्वम् एकाकी कर्त्तुम् न शक्नोषि। अतएव मम कथायां

मनो निधेहि, त्वामहं युक्तिं दर्शयामि, तत ईश्वर स्तव
सहायो भविष्यति, अपरम् ईश्वरस्य सम्मुखे त्वं लोकानां
पक्षः सन् तेषां कथा ईश्वरं ज्ञापय। त्वन्तु तान् विधिं २०
व्यवस्थाञ्च समुपदिश, तेषां गन्तव्यमार्गं कर्त्तव्यं कर्म्म
च तान् दर्शय। अपरं त्वं सर्व्वेषां मध्यात् कर्म्मकुशलमान- २१
वान् अर्थात् ईश्वरात् भीतान् सत्यवादिनो लोभत्त्यो-
यिनो लोकान् मनोनीतान् कृत्वा गृहाण, तेषामुपरि
सहस्रपतीन् शतपतीन् पञ्चाशत्पतीन् कुर्व्वन् नियोजय।
अपरं ते सर्व्वदा लोकान् विचारयिष्यन्ति; किन्तु २२
कस्मिंश्चित् महाविचार उपस्थिते तं तव समीपम्
आनेष्यन्ति, क्षुद्रान् सर्व्वविचारान् ते करिष्यन्ति, तेन
ते त्वया सह भारं वक्ष्यन्ति, तेन तव कर्म्म लघु भवि-
ष्यति। यदि त्वम् ईदृशं करोषि, ईश्वरस्य तादृशं कर्त्तुं २३
त्वामादिशति, तर्हि त्वं सोढुं शक्ष्यसि; अपरम् एते
सर्व्वे मानुषास्च क्षेमेण निजस्थानं गमिष्यन्ति। ततो २४
मूसाः श्वशुरस्य वचने मनो निधाय तस्य वाक्यानुसारेण
सकलकर्म्माणि कृतवान्। ततः परं मूसाः सर्व्वेभ्य इस्रा- २५
येलो वंशेभ्यः कर्म्मकुशलान् मानवान् मनोनीतान्
कृत्वा मनुजानां मध्ये मुख्यान् अर्थतः सहस्रपतीन्
शतपतीन् पञ्चाशत्पतीन् दशपतीन् कृत्वा नियोजया-

६ मास। तेन ते सर्व्वदा लोकानां विचारान् कुर्व्वन्ति;
दुर्व्बोध्यविचारान् मूसः समीपम् आनयन्ति; किन्तु
७ स्वयं क्षुद्रक्षुद्रकथानां विचारान् कुर्व्वन्ति। अन-
न्तरं मूसा निजश्वशुरे विसृष्टे स निजस्थानं प्रति
प्रतस्थे।

## १९ ऊनविंशोध्यायः।

१ मनुजेषु सीनयपर्व्वतम् उपगतेषु तान् प्रतीश्वरस्य संवादः ७ जनानां कृते मूस ईश्वरं प्रति उत्तरं १० मानुषान् पवित्रान् कर्त्तुं पर्व्वतं न स्प्रष्टुं चाज्ञापनं १४ मानवानां समक्षं पर्व्वतोपरीश्वरागमनञ्च।

१ इस्रायेलो वंशो मिसरो देशात् यस्मिन् दिने यात्रां
कृतवान्, ततो मासत्रयात् परं तस्मिन् दिने सीनय-
२ प्रान्तरम् उपस्थितवान्। ते रिफीदीमो यात्रां कृत्वा
सीनयपर्व्वतस्य प्रान्तरम् उपस्थितवन्तः, तस्मिन्
प्रान्तरे शिविरं स्थापयामासुः; इस्रायेलो वंशस्तस्य
३ पर्व्वतस्य सम्मुखे शिविरं स्थापयामास। ततःपरं मूसी-
श्वरस्य समीपम् आरूढे, परमेश्वरः पर्व्वतात् तमाहूय
जगाद, त्वं याकूबः सन्तानान् इदं वाक्यं वद, इस्रा-
४ येलो वंशम् इति ज्ञापय। अहं मिस्रिणः प्रति
यत् कृतवान्, यथाचोत्क्रोशः पक्षी पक्षाभ्यां, तथा
युष्मान् वहन् निजसमीपम् आनीतवान्, तत् यूयं
५ दृष्टवन्तः। इदानीं यदि यूयं मम कथां शृणुथ,

मम व्यवस्थाञ्च पालयथ, तदा सर्व्वस्यां पृथिव्यां मम
सत्यामपि यूयं सर्व्वेभ्यो लोकेभ्यो मम विशेषाधिकृता
भविष्यथ, मम निमित्तं याजकानाम् एको वंशः ६
पवित्रजातिश्च भविष्यथ, एताः सर्व्वाः कथा इस्रायेलो
वंशाय त्वं कथय।

तदानीं मूसा आगत्य तेषां प्राचीनाम् आहूय पर- ७
मेश्वरानुज्ञानुसारेण ताः सर्व्वाः कथास्तेषां समक्षं
प्रस्तुतवान्। ततः सर्व्वे लोका युगपद् अङ्गीकृत्य कथ- ८
यामासुः, परमेश्वरो यानि वाक्यानि कथितवान्,
तानि वयम् आचरिष्यामः। मूसाः परमेश्वरस्य समीपे ९
तेषां वचनानि निवेदयामास, तदा परमेश्वरो मूसे
कथितवान्, अहं निविडपयोदेन तव समीपम् आगत्य
त्वया सार्द्धं वाक्यं वदिष्यामि, तत् मानवाः श्रोतुं शक्य
सर्व्वदा त्वयि प्रत्येष्यन्ति; पश्चात् मूसा मानवानां
वाक्यानि परमेश्वरं ज्ञापयाञ्चकार।

तदानीं परमेश्वरो मूसां व्याहृतवान्, त्वं मनुजानां १०
समीपं गत्वाद्य परदिने च वसनानि धौतानि कार-
यित्वा तान् सर्व्वान् पवित्रांश्च कारयित्वा तृतीयदिन- ११
निमित्तं सर्व्वे सुसज्जा भवत; यस्मात् तृतीये दिने
परमेश्वरः सकलमानवानां समक्षं सीनयधराधरस्यो- १२

परि समवरोक्ष्यति। तस्मात् त्वं मानवानां चतुर्दिक्षु
सीमानं निरूप्य वचनमिदं व्याहर, यूयं धराधरम्
आरोढुं तस्य सीमां स्प्रष्टुञ्च सावहिता भवत, यतो यः
कश्चित् धराधरं स्प्रक्ष्यति सोऽवश्यं हतो भविष्यति।
१३ तस्मात् कोपि तत्र करस्पर्शं न करोतु, यदि करोति
तर्हि स पाषाणाघातेनावश्यं मरिष्यति, यद्वा वाणेन
विद्धो भविष्यति, पशुर्भवतु मानुषो वा भवतु,
स कदाचन न जीविष्यति; तूर्य्यां वादितायां ते
धराधरस्य समीपम् आगमिष्यन्ति।
१४ अनन्तरं मूसा धराधराद् अवरुह्य मानवानां
समीपम् आगत्य तान् पवित्रीकृतवान्; ते च निज-
१५ वसनानि धौतानि कृतवन्तः। पश्चात् स मनुजान्
व्याहृतवान्, यूयं तृतीयदिनकृते सुसज्जा भवत, निज-
१६ निजभार्य्यायाः समीपं मा व्रजत। ततः परं तृतीय-
दिनस्य प्रातःकाले जाते तडित्स्तनितं तडित् धरा-
धरोपरि निविडजीमूता अतीवोच्चैःस्वरेण तूरीनिर्घो-
षश्च भवितुम् आरेभिरे, तेन शिविरस्थिताः सर्व्वे
१७ मनुजा वेपमाना अभवन्। तदानीं मूसा ईश्वरं साक्षात्
कारयितुं मानवान् शिविरात् बहिः कृतवान्, ते च
१८ भूधरस्याधः स्थितवन्तः। तदा सीनयधाराधरो धूम-

मयो बभूव; यतः परमेश्वर स्तदुपरि वह्निनावरूढ-
वान्; अपरं चुल्लीधूमइव तस्मात् धूम उदगच्छत् तेन
कृत्स्नो भूधरोऽतीव कम्पितुम् आरभत। पश्चात् क्रमात् १९
तूरीनिर्घोषोऽतीव वृद्धिमेतुम् आरेभे; तदानीं मूसा
कथायां कथितायाम् ईश्वर आकाशवाचा तदुत्तरं
व्याजहार। अनन्तरं परमेश्वरे सीनयधराधरोपरि २०
अर्थतो भूधरस्य शृङ्गोपर्य्यवरूढे, तत्र स्थाने स मूसाम्
आहूतवान्; ततो मूसा आरुरोह। तदानीं परमेश्वरो २१
मूसां गदितवान्, मनुजा यथा परमेश्वरं वीक्षितुं
सीमानं न लङ्घन्ते, तेषां बहवो यथा न विन-
श्यन्ति, एतदर्थं त्वम् अवरुह्य मानुषान् निवारय।
अपि याजकाः परमेश्वरसमक्षम् आगच्छन्ति, तेषाम् २२
उपरि यथा स नाक्रामति, तन्निमित्तं ते स्वान् पवि-
त्रान् कुर्व्वन्तु। ततो मूसाः परमेश्वरं व्याजहार, मानवाः २३
सीनयधराधरम् आरोढुं न शक्नुवन्ति; यतो भूधरस्य
सीमानं निरूपयत तां पवित्रां कुरुतेति त्वमस्मान्
आज्ञापयः। तदा परमेश्वरः तस्मै कथितवान्, याहि २४
त्वमवरोह, पश्चात् त्वम् हारोणा सार्द्धम् आरोह;
किन्तु याजकानां मनुजानाञ्चोपरि परमेश्वरो यथा
नाक्रामति, तदर्थं ते तस्य समीपम् आगन्तुं सीमानं

२५ नातिक्रामन्तु । तदा मूसा मानुषाणां समीपम् अव-
रुह्य तान् तादृग् आज्ञापयामास ।

## २० विंशोऽध्यायः ।

१ इस्रायेलाम् आज्ञानां प्रथमो भागः ११ इस्रायेलाम् आज्ञानां द्वितीयो भागः १८ मानुषाणां भयं, तान् प्रति मूसः सान्त्वनवाक्यं २२ देवपूजानिषेधश्च ।

१ अनन्तरम् ईश्वर एताः कथाः कथयामास, यो मिस्र-
२ देशात् अर्थतो दासत्वरूपाद् गेहाद् युष्मान् आनीत-
वान् स युष्माकं प्रभुः परमेश्वरोऽहम् ।
३ मम सा[illegible] तव काचिदन्या देवता न तिष्ठतु ।
४ निजार्थं काञ्चित् तक्षितप्रतिमाम् अर्थात् उप-
रिस्थे स्वर्गे वा नीचस्थायां पृथिव्यां वा धरण्या
अधःस्थे तोये स्थितस्य कस्यचित् वस्तुनो मूर्त्तिं
५ मा निर्म्माहि । ता न नम, ता न सेवस्व, यतोऽहं
तव प्रभुः परमेश्वरः पापात् क्रोधी, ये पितृलोका
माम् ऋतीयन्ते, तृतीयचतुर्थपुरुषान् यावत् तेषां
६ सन्तानानाम् उपर्य्यधर्म्मप्रतिफलदाता ; किन्तु ये मयि
प्रीयन्ते ममाज्ञाश्च पालयन्ति तेषां सहस्रपुरुषान्
७ यावत् दयाक्षत् । त्वं निजप्रभोः परमेश्वरस्य नाम
निरर्थकं मा गृहाण, यतो यः कश्चित् तस्य नाम
निष्प्रयोजनं गृह्णाति, परमेश्वरस्तं निरपराधीति न

गणयति। विश्रामदिनं स्मरन् पवित्रीकुरु। षट् ८
दिनानि श्रमित्वा वाणिज्यादि सर्व्वं कर्म्म कुरु; ९
किन्तु सप्तमे दिने, अर्थतः तव प्रभोः परमेश्वरस्य १०
विश्रामदिने त्वं वा तव पुत्रो वा तव दुहिता वा तव
दासो वा पशु र्वा द्वारवर्त्ती विदेशी कोपि किमपि
कार्य्यं मा कार्षीः। यतः परमेश्वर आकाशं पृथिवीं ११
सागरं तन्मध्यस्थानि सकलवस्तूनि च षड्भि र्दिनै
र्निर्म्माय सप्तमे दिने विश्रान्तवान्, एतत्कारणात् पर-
मेश्वरो विश्रामं दिनं वरं दत्त्वा पवित्रीकृतवान्।

त्वं निजपितरं मातरञ्च सम्मन्यस्व, तेन तव १२
प्रभुः परमेश्वरो यं देशं तुभ्यं दास्यति, तस्मिन् देशे तव
दीर्घकालम् आयु र्भविष्यति। नरहत्यां मा कार्षीः। १३
परदारान् मा गच्छ। चौर्य्यं मा कार्षीः। स्वस्य १४
समीपवासिनो विरुद्धं मिथ्यासाक्ष्यं मा देहि। स्वस्य १५
समीपवासिनो गेहे लोभं मा कार्षीः; स्वस्य समीप १६
वासिनो जायायां वा दासे वा दास्यां वा गवि वा
गर्द्दभे वा तव समीपवासिमानुषस्य कस्मिंश्चित् वस्तुनि १७
लोभं मा कार्षीः।

तदानीं सर्व्वे मानवा जीमूतस्तनितं तडितं तूरी- १८
स्वनं धूमयुक्तं धराधरञ्च दृष्टवन्तः; दृष्ट्वा च पृथग्

१९ भूत्वा दूरे स्थितवन्तः; ततो मूसं कथितवन्तः, त्वम
अस्माभिः सार्द्धं कथां कथय, तां वयं श्रोष्यामः, किन्त्वी-
श्वरोऽस्माभिः सार्द्धं कथां न कथयतु, नो चेत्
२० वयं मरिष्यामः। ततो मूसा मानुषान् अवदत्, मा
भैष्ट युष्माकं सम्मुखे ईश्वरं प्रति यथा भयं तिष्ठति,
यथा च पापं न कुरुथ, तदर्थम् ईश्वरो युष्मान् परी-
२१ क्षितुम् आगतवान्। तदानीं लोका दूरे तिष्ठन्त आसन्,
किन्तु यत्र स्थाने ईश्वर आसीत्, तस्य घोरान्धकारस्य
समीपं मूसा [illegible]।

२२ अनन्तरं परमेश्वरो मूसां जगाद, त्वम् इस्रायेलो
वंशाय कथामिमां कथय, अहं गगणे तिष्ठन् युष्माभिः
२३ सार्द्धम् आलपम् इति स्वयं दृष्टवन्तः। अतो युष्माभि-
र्मत्समक्षं दुर्व्वर्णमूर्त्तिं मा कार्ष्ट, स्वार्थं सुवर्णमूर्त्तिञ्च
मा कार्ष्ट।

# आदिपुस्तकं।

## मुसालिखितं प्रथमपुस्तकं।

१ प्रथमोऽध्यायः।

१ पृथिव्या आकाशस्य च सृष्टिः ३ दीप्तेः सृष्टिः ६ शून्यतायाः सृष्टिः ९ शुष्कभूमेः सृष्टिः ११ तृणादीनां सृष्टिः १४ चन्द्रसूर्यादीनां सृष्टिः २० मीनपक्षिणां सृष्टिः २४ ग्राम्यवन्यपश्वादीनां सृष्टिः २६ ईश्वरस्य सादृश्येन मनुष्यस्य सृष्टिः २९ मानुषादीनां भक्ष्यम्।

१ आदित ईश्वर आकाशं पृथिवीञ्च ससर्ज।

२ पृथिवी निर्जना शून्या चासीत्, अन्धकारश्च
गम्भीरजलस्योपरि तस्थौ, तदानीम् ईश्वरस्यात्मा
तोयानि व्याप्यासीत्।

३ अनन्तरं, दीप्ति र्भवतु, इतीश्वरेणाज्ञापिते दीप्ति
४ र्बभूव। तदानीम् ईश्वरो दीप्तिमुत्तमां विलोक्य तमि-
५ स्रात् तां पृथक् कृत्वा दीप्ते र्नाम दिवस इति, तमिस्रस्य
नाम रात्रिरिति कृतवान्। ततः सन्ध्यायां प्रातःकाले
च जाते प्रथमो दिवसो बभूव।

६ ततः परं तोयानां मध्ये शून्यत्वमुद्भूय तोयानि
७ भागद्वयेन पृथक् करोतु। ईश्वर इत्यादिश्य शून्य-
त्वं ससर्ज, ऊर्द्धस्थिततोयेभ्योऽधःस्थिततोयानि पृथक्

चकार च, ततस्तादृशं बभूव। तदेश्वरस्तस्य शून्यस्य नाम ८
गगणं चकार। सन्ध्यायां प्रातःकाले च जाते द्वितीयो
दिवसो बभूव।

पश्चात् ईश्वर इत्याज्ञापयामास, गगणाधःस्थितं ९
सर्व्वाम्भ एकस्मिन् मिलतु स्थलञ्च प्रकाशतां; ततस्तथैव
बभूव। तदेश्वरः स्थलनाम पृथ्वीति तोयराशिर्नाम १०
समुद्र इति कृतवान्, तच्चोत्तमं ददर्श।

अपरम् ईश्वर आदिदेश, मेदिन्यां तृणानि सबी- ११
जौषधयो नानाजातीयाः सबीजफलदायिनो मही-
रुहाश्च समुत्पद्येरन्; ततस्तथैवाभवत्; अर्थात् पृथिव्यां १२
तृणानि सबीजनानाजातीयौषधयः सबीजनानाविध
वृक्षाश्च जातानि, तदानीमीश्वरस्तानि सर्व्वाण्युत्तमानि
दृष्टवान्। तथा सन्ध्यायां प्रातःकाले च जाते तृतीयो १३
दिवसो बभूव।

अपरम् ईश्वर आज्ञापयत्, निशातो दिवसं १४
पृथक् कर्त्तुं दिवसवत्सरर्त्तुचिह्ननिमित्तं नभोमण्डले
ज्योतिर्गण उत्पद्यतां; तथा वसुन्धरायामालोकं १५
कर्त्तुं गगणमण्डले तिष्ठतु; ततस्तादृगभवत्। इत्थम् १६
ईश्वरो दिवसं शास्तुम् महाज्योतिरेकं, क्षणदाञ्च
शास्तुं ततः क्षुद्रज्योतिरेकं, इमे वृहती ज्योतिषी

१७ ऋतुनिवहञ्च ससर्ज। ततो धरित्रीं दीपयितुं, दिवा-
रात्रौ शास्तुं, तमिस्राद् विद्युतिं पृथक् कर्त्तुञ्चेश्वर-
१८ स्तानि ज्योतींषि गगणमण्डले स्थापयामास; तानि
१९ सर्व्वाणि चेश्वर उत्तमानि वीक्षाञ्चक्रे। तथा सन्ध्या-
प्रातःकालयो र्जातयोः सतोस्तुर्य्यो दिवसो बभूव।
२० ततः परं सलिलानां मध्ये नानाविधा उरोगामिनः
प्राणिनो, मेदिन्या ऊर्द्ध्वं नभोमण्डले उड्डयितुं शक्ता
२१ विहगाश्च बाहुल्यम् उत्पद्यन्ताम्, इतीश्वर आदिश्य
बृहन्मीनादीन् नानाप्रकारान् उरोगामिनः कीलाल-
२२ चरान् प्राणिनो नानाविधखगांश्च सृष्टवान्। अनन्तरम्
ईश्वर एतान् सर्व्वान् उत्तमान् वीक्ष्य एतानाशिषं
जगाद, यूयं प्रजावन्तो बहुवंशाश्च भूत्वा सरित्पतीनां
सलिलानि परिपूरयत, वसुधाया उपरि विहङ्गमाश्च
२३ बहुलीभवन्तु। तथा सन्ध्यायां प्रभाते च जाते पञ्चमो
दिवसोऽभवत्।
२४ ततः परम् ईश्वर आदिदेश, धरायां ग्राम्या वन्याश्च
पशव उरोगामिनो जन्तुप्रभृतयो नानाविधा जन्तवो
२५ जायन्ताम्; ततस्तथैव बभूव। इत्थम् ईश्वरो नाना-
विधान् ग्राम्यवन्यपशून् भूमे र्नानाजातीयान् उरङ्गम-
जन्तूंश्च सृष्ट्वा सर्व्वानेवोत्तमान् व्यालुलुके।

अनन्तरम् ईश्वरो व्याचचक्षे, वयं स्वप्रतिमूर्त्त्या २६
स्वादृश्ये च आदमं (अर्थात् मनुष्यं) सृजामः, ते जल-
चरमीनान् खेचरविहङ्गान् ग्राम्यवन्यपशूंश्च सर्व्व-
पृथिव्या भूमिस्थितोरङ्गमान् प्राणिनश्च शासतु।
ईश्वरेण स्वप्रतिमूर्त्त्या मनुष्यः सृज्जे; ईश्वरस्य प्रति- २७
मूर्त्त्यैव स सृष्टः पुरुषत्वस्त्रीत्वाभ्यां तौ सृष्टौ। तद-
नन्तरम् ईश्वरस्ताभ्याम् इत्याशिषं ददौ, युवां २८
प्रजावन्तौ बहुलवंशौ च भवतं, पृथिवीं परिपूर्य्य
वशीभूतां कुरुतं, किञ्च सलिलचरमीनान् खेचर-
खगान् भूमिस्थोरङ्गमजन्तूंश्च शिष्टं।
ईश्वरोऽपरमपि कथयामास, पश्यतं, पृथिवीस्थाः २९
सर्व्वसवीजौषधीः सर्व्वान् सवीजफलदायिनो महो-
रुहांश्च युवाभ्यां भोक्तुम् अददाम्। तथा वन्यपशुखेचर ३०
खगेभ्यो भूमिस्थितसजीवोरङ्गमजन्तुभ्यश्च भोक्तुं सर्व्व-
हरितौषधीरहमदाम्; ततस्तथैव बभूव। अनन्तरम् ३१
ईश्वरः स्वसृष्टसकलवस्तूनि निरीक्ष्य सर्व्वाण्युत्तमानि
ददर्श। तथा सन्ध्यायां प्रातःकाले च जाते षष्ठं दिनं
बभूव।

## २ द्वितीयोऽध्यायः।

१ विश्रामवारस्य निरूपणं ४ सृष्टेर्वृत्तान्तः ७ एदन्नुद्याननिर्म्माणं
१५ तस्य मध्ये मनुष्यस्थापनं १८ स्त्रियाः सृष्टिवृत्तान्तश्च।

१ इत्थम् आकाशस्य पृथिव्यास्तदुभयस्थानां सर्व्व-
२ वस्तूनाञ्च सृष्टिः सम्पूर्णा बभूव। पश्चात् सप्तमे दिने
ईश्वरः स्वकृतकर्म्माणि समाप्य स्वकृतकार्य्येभ्यो विश्र-
३ श्राम। तथा तद्दिनस्य समस्तस्वसृष्टकार्य्येभ्यो
विश्रामदिनत्वात् ईश्वर आशिषं गदित्वा तत् सप्तमं
दिनं पवित्रं चकार।

४ सृष्टिकाले गगणधरित्र्योरियं विवृतिः। यस्मिन्
काले प्रभुः परमेश्वरः पृथिव्याकाशौ ससर्ज, तदानीं
५ क्षेत्रे किमपि तृणं नासीत् क्षेत्रे काप्योषधिश्च नासीत्;
यतः प्रभुः परमेश्वरः पृथिव्यां न वर्षयामास, कृषिकर्म्म
६ कर्त्तुं मनुष्यो नासीत्। किन्तु पृथिव्याः शिशिरः
समुत्थाय सर्व्वां भूमिम् असिञ्चत्।

७ अपरञ्च परमेश्वरेण मृदा मनुष्यं निर्म्माय तस्य
नासारन्ध्रे प्राणवायौ प्रवेशिते स सात्मप्राणी बभूव।
८ अनन्तरं प्रभुः परमेश्वरः पूर्व्वदिक्स्थिते एदन्नामकदेशे
उद्यानमेकं कृत्वा तत्र स्वसृष्टं तं मानवं स्थापयामास।
९ प्रभुः परमेश्वरः तस्योद्यानस्य मध्यस्थाने अमृतं पादपं
सदसज्ज्ञानदातारं पादपं भूमौ सर्व्वजातीयं सुदृश्यं

सुखाद्यफलं पादपञ्च जनयाञ्चकार। उद्यानं सलिलेन १०
सेक्तुम् एका स्रवन्ती एदनुद्यानात् निर्गाय विभिद्य
चतुर्मुखी भूत्वा प्रोवाह। तस्याः पीशोनाख्या प्रथमा ११
तटिनी सुवर्णोत्पादिनो हवीला देशनिवहान् वेष्टित्वा
प्रोवाह। तस्य देशस्य जातरूपम् अतीवोत्तमं, तस्मिन् १२
स्थाने रत्नानि वैदूर्य्यमणयश्च जायन्ते। तथा तस्या १३
गीहोनाभिका द्वितीया धुनी समस्तकूशदेशं वेष्टमाना
प्रोवाह। तथा तस्या हिद्देकल्नामा तृतीया धुनी १४
अशूरियादेशस्य पूर्व्वदिशा प्रोवाह। तथा तस्याः चतु-
र्थधुन्या नाम फरात्।

ततः परं परमेश्वरस्तस्योद्यानस्य कर्म्म कर्त्तुं तद्- १५
वितुञ्च आदमं नियोजयामास। किञ्च प्रभुः परमेश्वर- १६
स्तमित्यादिदेश, एतस्योद्यानस्य सकलपादपानां फलानि
त्वया स्वच्छन्दं भोक्तव्यानि; किन्तु सदसज्ज्ञानदातुः १७
पादपस्य फलानि मा भुञ्जन्तां, यतो यस्मिन् दिने तत्
खादिष्यते तस्मिन्नेव दिने निश्चितं मरिष्यते।

अनन्तरं प्रभुः परमेश्वरो जगाद, मनुष्यो यद् एकाकी १८
तिष्ठत् तन् नोचितं, तस्य योग्य एकः सहकारी मया
निर्म्मास्यते। प्रभुणा परमेश्वरेण मृदा निर्म्मितानां वन्य- १९
पशुखेचरखगानां कानि नामान्यादम् करिष्यतीति

वेदितुं परेश्वरः सर्व्वप्राणिनस्तस्य समीपमानयामास,
तदानीं स यस्य यन्नाम चकार, तस्य तदेव नामाभवत्।
२० किन्तु येषां पशूनां खेचरखगानां वन्यपशूनाञ्च ना-
मानि कृतवान्, तेषां मध्यत आदमो योग्य एकः सह-
२१ कारी प्राप्तो नासीत्। अनन्तरं प्रभुः परमेश्वर आदमम्
अतिनिद्राप्य तस्यां निद्रायां तस्यैकं पञ्जरं गृहीत्वा
२२ क्रव्येण तत् स्थानं पूरयामास। किञ्च प्रभुणा पर-
मेश्वरेण यः पञ्जर आदमो नीतस्तेन स एकां स्त्रियं
२३ निर्म्माय ताम् आदमः सन्निधिम् आनिनाय। तदानीम्
आदम् आचचक्षे, एषा मदीयास्थाम् अस्थि मदीयमां-
सस्य मांसं ; तयेयं नरादजनिष्ट, तस्माद् अस्या नाम
२४ नारीति करिष्यते। अपरञ्च मानवः स्वमातापितरौ
परित्यज्य स्वभार्य्यायाम् आसंक्ष्यति, तौ द्वौ जनावेकाङ्गौ
२५ भविष्यतः। तदानीम् आदम् तस्य भार्य्या च तयो-
र्नग्नत्वे स्थितयोरपि लज्जाबोधो नासीत्।

३ तृतीयोऽध्यायः।

१ सर्पस्य कथनं ८ तेन मानुषाणां पतनं १४ सर्पस्य शापं १६ नारीपुरुषयोः शापं २१ ताभ्यां वस्त्रं दत्वा उद्यानतो दूरीकरणञ्च।

१ प्रभुणा परमेश्वरेण सृष्टानां भूचरजन्तूनां मध्ये
२ सर्पोऽतीव खल आसीत्। स तां नारीमवदत्, अपि

अस्योद्यानस्य कस्यचिदपि पादपस्य फलानि भोक्तुं
परमेश्वरो युवां न्यषेधत्, किमिदं सत्यं? ततो नारी सर्पं
प्रोवाच, आवाम् एतस्योद्यानस्य सर्व्वेषां विटपिनां
फलानि भोक्तुं शक्नुवः, केवलम् उद्यानमध्यस्थितस्य ३
पादपस्य फलं परमेश्वरेण कथितं, युवाम् एतत् फलं
मा भुञ्जाथाम् मा स्पृशतञ्च, तत् कृत्वा मरिष्यथः
तदा भुजगो नारीं बभाषे, युवां निश्चितं न मरिष्यथः, ४
किन्तु यदा तत् खादिष्यथः, तदा युवयो र्लोचनप्रकाशो ५
भविष्यति ; तत ईश्वर इव भद्राभद्रज्ञानं लप्स्येथे,
इतीश्वरो जानाति। तदा नारी तं मनोहरं सुदृश्यं ६
सुखाद्यफलं ज्ञानलाभाय वाञ्छनीयञ्च विज्ञाय तस्य
फलानि शातयित्वा बुभुजे, स्वस्वामिने च ददौ सोपि
भुक्तवान्। तेन तयोरुभयो र्नयनप्रकाशो बभूव, ततस्तौ ७
स्वकीयनग्नतां विज्ञाय वटपत्राणि स्यूत्वा कटौ बबन्धतुः।
ततो दिवावसाने मध्युद्यानं गमनागमनकारिणः ८
प्रभोः परमेश्वरस्य शब्दं श्रुत्वा आदम् तस्य जाया च
तस्य सम्मुखात् शाखिनां मध्येऽन्तर्दधाते। तदा प्रभुः ९
परमेश्वर आदमम् आहूय बभाषे, त्वं कुत्र? ततः स
उवाच, उद्याने भवतः शब्दं श्रुत्वा नग्नताकारणात् भीत्वा १०
स्वमगोपयम्। स जगाद, त्वं नग्नोसीति कस्त्वामबोधयत्? ११

यस्य च वृक्षस्य फलं भोक्तुं त्वामहं न्यषेधं, तस्य वृक्षस्य
१२ फलं किं त्वया भुक्तं? तत आदमा गदितं,त्वं यां योषितं
मम सङ्गिनीमकरोः, सा मह्यं तस्य पादपस्य फलम्
१३ अददात् तन्मया भुक्तं। प्रभुः परमेश्वरो नारीं जगाद,
त्वया किमिदम् अकारि? नारी बभाषे,सर्पस्य प्रवञ्चन-
याहं अखादम्।
१४ पश्चात् प्रभुः परमेश्वर उरगं जगाद,त्वमिदं कर्म्मा-
करोः, तस्मात् ग्राम्यवन्यपशुगणात् अधिकशापयस्तो
भूत्वा वक्षसा गमिष्यसि, यावज्जीवं धूलीः खादिष्यसि
१५ च। किञ्च त्वया योषिता च त्वदीयवंशेन तस्या वंशेन
च परस्परं वैरितां जनयिष्यामि, तेन स त्वदीयशिर
आहनिष्यति, त्वञ्च तस्याः पादमूले आहनिष्यसि।
१६ अनन्तरं स नार्य्यै कथयामास,त्वदीयप्रसववेदनाम्
अहम् अतीव वर्द्धयिष्यामि, ततस्त्वम् अतिशयकष्टेन
सन्तानान् प्रसविष्यसि,तथा स्वामिनो निघ्नीभूय स्था-
स्यसि स च त्वां शास्यति।
१७ ततः परं स आदमे कथयाञ्चकार, यस्य पादपस्य
फलं भोक्तुं त्वामहं न्यषेधं, त्वं योषितः कथां निशम्य
तस्य पादपस्य फलं अभुंक्थाः,तत् कारणात् भूमिरभि-
शप्ता जाता ; त्वया यावज्जीवं क्लेशं प्राप्य तस्याः अन्नादि

भक्षिष्यते। तस्यां शृगालकण्टकानि नानाकण्टकि- १८
द्रुमा उत्पत्स्यन्ते, त्वञ्च क्षेत्रस्यौषधीः खादिष्यसि। १९
अपरञ्च यस्या मृत्तिकाया अजायथा यावत् तस्यां
लीनो न भविष्यसि तावत् घर्म्माक्तमुखेन भोक्ष्यसे;
यतस्त्वं मृत्तिका, पुनरपि मृत्तिकायां लीनो भवि-
ष्यसि। अनन्तरं आदम् तस्या योषितो नामधेयं हवा २०
(अर्थात् जीवनीति) चक्रे, यतः सा सर्व्वेषां सजीवलो-
कानां माता। ततः प्रभुः परमेश्वरः चर्म्मणो वसनं २१
निर्म्माय आदमं तस्य भार्य्याञ्च परिधापयामास।

ततः परं प्रभुः परमेश्वर उवाच, पश्य, मानवो भद्र- २२
मभद्रञ्च विज्ञाय अस्माकमेकइवाभवत्; इदानीं स यथा
हस्तं प्रसार्य्य अमृततरुवृक्षस्य फलं खादयित्वा तद्
भक्षा अमरो न भवेत्, तदर्थं प्रभुः परमेश्वरस्तम् एदन् २३
उद्यानात् अपसार्य्य तदुत्पादिन्यां मृत्तिकायां कृषिं
कर्त्तुं तं न्ययोजयत्। इत्थं स तं मानुषं दूरीकृत्य २४
अमृततरोः पन्थानं रक्षितुं एदनुद्यानस्य पूर्व्वस्यां
दिशि घूर्णायमानाम् तेजोमयाम् खड्गधराम् स्वर्गीयान्
किरूवः स्थापयामास।

---

४ चतुर्थोऽध्यायः।

१ काबिल्हाबिलोर्जन्म: ८ हाबिलो वधात् काबिलः शापः १६ काबिलो वंशावलिः २५ शेतो जन्मोक्तं जननम्।

१ अपरम् आदमि स्वजायां हवाम् उपगते सा गर्भिणी
भूत्वा काबिलं (अर्थात् लाभ) नामानं पुत्रमेकं प्रसुषुवे
कथयामास च, परमेश्वरात् मम पुत्रैकलाभो जातः।
२ पश्चात् सा हाबिलं (अर्थात् अलीक) नामानं तस्य
सहोदरं प्रसुषुवे; स हाबिल् मेषपालकः, काबिल् च
३ कृषीवल् आसीत्। कालपरिणामे काबिल् प्रभुमु-
४ द्दिश्य स्वीयकृषिकर्म्मणः फलम् उत्ससर्ज। तथा
५ हाबिल् स्वपशुव्रजस्य प्रथमजातं पुष्टपशुम् उत्ससर्ज।
किन्तु परमेश्वरः काबिलं तेनोत्सृष्टं वस्तु चाभ्यग्रहीत्
हाबिलं तेनोत्सृष्टं वस्तु च नाभ्यग्रहीत्, तत्कारणात्
६ काबिल् क्रुद्धो विषण्णवदनो बभूव। ततः परमेश्वरस्तम्
उवाच, त्वं कुतः क्रुध्यसि? कुतश्च विषण्णवदनो
७ भवसि? यदि शुभं करोषि, तदा किं नानुग्रहीष्यसे?
यदि शुभं न करोषि, तर्हि पापं द्वारि तिष्ठति।
तव भ्राता तव वशीभूय स्थास्यति, त्वञ्च तं शास्यसि।
८ अपरञ्च काबिल् स्वीयभ्रात्रा सह संललाप; तत्पश्चात्

तयोः क्षेत्रं गतयोः सतोः काबिल् आक्रम्य स्वीय-
भ्रातरं हाबिलं निजघान।

तदनन्तरं परमेश्वरः काबिलं पप्रच्छ, तव भ्राता ९
हाबिल् कुत्र? ततः स प्रत्युवाच, नाहं जानामि, किमहं
निजभ्रातू रक्षकः? ततः स कथयामास, त्वया किम- १०
कारि? तव भ्रातुः शोणितं भूम्या माम् आह्वयति।
अतो या भूमिस्तव हस्ताभ्यां हतस्य भ्रातुः शोणितं ११
पीतवती तस्यां भूमौ त्वमभिशप्तो भवसि। ततः कृषि- १२
कर्म्मणि त्वया कृतेपि बहुशस्यं नोत्पत्स्यते, तथा त्वं
धरिण्यां पर्य्यटन् भ्रमन् च भविष्यसि। ततः काबिल् १३
बभाषे, एतादृशो दण्डो मया न सह्यः। अद्य यदि त्वं १४
माम् अस्मात् स्थानाद् अपसारयसि, तर्हि तव समक्षाद्
वहि र्गत्वा पर्य्यटन् भ्रमन् च भविष्यामि तथा कोपि
मानुषो मां प्राप्य हनिष्यति। तदा परमेश्वरो जगाद, १५
यः कश्चित् काबिलं हनिष्यति, तस्य सप्तगुणदण्डो
भविष्यति, तस्मात् कोपि तं वीक्ष्य यथा न हनिष्यति,
तदर्थं परमेश्वरः काबिले चिह्नमेकं निदधौ।

काबिल् प्रभोः समक्षात् प्रस्थाय एदनः पूर्व्वस्यां १६
दिशि नोद् नामनि देशे न्युवास। अनन्तरं काबिलि १७
स्वभार्य्यामुपगते सा गर्भवती भूत्वा हनोक्नामानं पुत्रं

प्रसुषुवे, किञ्च स नगरमेकं निर्म्माय स्वपुत्रनामानुसारेण
१८ तस्य नाम हानोक् चक्रे। तस्य हनोकः पुत्र ईरद्, ईरदः
पुत्रो मिहूयायेल्, मिहूयायेलः पुत्रो मिथूशायेल्,
१९ मिथूशायेलः पुत्रो लेमक्। तस्य लेमको द्वे जाये, एकस्या
२० नामधेयम् आदा तदन्यायाः नाम सिल्लासीत्। तस्या
आदाया गर्भे जातो यो याबल्, स दूष्यस्थ इवासिनां पशु-
२१ पालकानाम् आदिपुरुष आसीत्। अपरं यूबल् नामा
तस्यैको भ्राता वीणावादकानां वंशीवादकानाञ्चादि-
२२ पुरुष आसीत्। किञ्च सिल्लाया गर्भजन्मा तूबल्का-
यिन्नामा पुत्रः पित्तलस्य लोहस्य च नानाविधं कर्म्म
कर्त्तुं निपुण आसीत्; तस्य तूबल्काविनो नयमा ना-
२३ मिका भगिन्यासीत्। पश्चात् लेमक् स्वभार्य्ये अवदत्,

हे आदे शृणु मद्वाक्यं हे सिल्ले त्वञ्च तत् शृणु।
हे मद्भार्य्ये युवाभ्यां मे वाक्ये मनो निधीयतां।
आक्रान्तः सन्नहं पूर्व्वं हतवान् लोकमेककं।
आघातः सन्नहं तेन युवानं हतवान् नरं।
२४ फलं वधस्य काविनो यदि सप्तगुणं भवेत्।
गुणितं सप्तसप्तत्या मद्वधस्य फलं भवेत्।

२५ अनन्तरम् आदमि पुनस्स्वभार्य्याम् उपगते
सा गर्भवती भूत्वा पुत्रमपरं प्रसुषुवे, तथा काविना-

हतस्य हाबिलः प्रतिनिधिरूपं पुत्रमपरं परमेश्वरो
मह्यं दत्तवान् इति कथयित्वा सा तस्य नाम शेत्
अर्थात् प्रतिनिधिं चक्रे। अनन्तरं तस्य शेतः पुत्रे जाते २६
स तस्य नाम इनोश् चक्रे; तदानीं लोकाः परमेश्वरस्य
नाम्नि प्रार्थनां कर्त्तुं प्रारभन्त।

### ५ पञ्चमोऽध्यायः।

१ आदमो विहृतिः ६ शेतो विहृतिः ९ इनोशो विहृतिः १२ कैननो विहृतिः १५ महललेलो विहृतिः १८ येरदो विहृतिः २१ हनोको विहृतिः २५ मिथूशेलहो विहृतिः २८ लेमको विहृतिश्च।

आदमो वंशावलिविवरणं। यदेश्वरो मनुष्यं ससर्ज, १
तदा स्वसादृश्येन तं सृष्टवान्। स्त्रीत्वपुंस्त्वाभ्यां ताव् २
असृजत्; किञ्च तदानीं ताभ्याम् आशिषं दत्त्वा आदम्
(अर्थात् मनुष्य) इति नाम चकार। तत आदमस्त्रिंश- ३
दधिकशतवत्सरे वयसि तस्य सदृशे तुल्ये च पुत्रे
जाते तस्य नाम शेतं चक्रे। अस्य शेतो जन्मनः परम् ४
आदम् अष्टशतानि वर्षाणि जीवन् पुत्रान् कन्याश्च
जनयामास। साकल्येन त्रिंशदधिकनवशतवर्षवयसि ५
सति तस्य मृत्यु र्बभूव।

ततः परं शेतः पञ्चाधिकशतवत्सरवयसि सति ६
इनोश् नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः ७

परं शेत् अष्टशतानि वर्षाणि जीवन् पुत्रान् कन्याश्च
८ जनयाञ्चक्रे। साकल्येन द्वादशाधिकनवशतवत्सरवयसि
सति तस्य मृत्यु र्बभूव।
९ इनोशो नवति वत्सरवयसि सति कैनन् नामा तस्य
१० पुत्रो जज्ञे। तस्य जन्मनः परम् इनोश् पञ्चदशाधिकाष्ट-
११ शतवर्षाणि जीवन् पुत्रान् कन्याश्च जनयाञ्चक्रे। साक-
ल्यतः पञ्चाधिकनवशतवत्सरवयसि तस्य मरणं बभूव।
१२ तस्य कैननः सप्तति वत्सरवयसि सति महललेल्
१३ नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः परं कैनन् चत्वा-
रिंशदधिकाष्टशतवत्सरान् जीवन् पुत्रान् कन्याश्च
१४ जनयाञ्चक्रे। साकल्यतो दशाधिकनवशतवत्सरवयसि
सति तस्य मृति र्बभूव।
१५ तस्य महललेलः पञ्चषष्टिवत्सरवयसि सति तस्य येरद्
१६ नामा पुत्रो जज्ञे। तस्य जन्मनः परं महललेल् त्रिंश-
दधिकाष्टशतानि वर्षाणि जीवन् पुत्रान् कन्याश्च जन-
१७ याञ्चक्रे। साकल्येन पञ्चनवत्यधिकाष्टशतवत्सरवयसि
सति तस्य मृति र्बभूव।
१८ येरदो द्विषष्ट्यधिकशतवत्सरवयसि सति हनोक्-
१९ नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः परं येरद् अष्ट-
शतानि वर्षाणि जीवन् पुत्रान् कन्याश्च जनयाञ्चक्रे।

साकल्येन द्विषष्ट्यधिकनवशतवत्सरवयसि सति तस्य २०
मरणं बभूव।

हनोको वयसि पञ्चषष्टिवत्सरे सति मिथूशेलह- २१
नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः परं हनोक् २२
त्रीणि शतानि वर्षाणि यावत् ईश्वरेण सार्द्धं गमना-
गमने चकार, तथा पुत्रान् कन्याश्च जनितवान्। २३
ईश्वरस्य सहगामी सन् साकल्येन पञ्चषष्ट्यधिकशत-
त्रयवत्सरवयसि सति सोऽन्तर्दधे; फलत ईश्वरस्तं २४
निनाय।

अनन्तरं मिथूशेलहः सप्ताशीत्यधिकशतवत्सरव- २५
यसि सति लेमक् नामा तस्य पुत्रो जज्ञे। तस्य जन्मनः २६
परं स द्व्यशीत्यधिकसप्तशतानि वर्षाणि जीवन् पुत्रान्
कन्याश्च जनयाञ्चक्रे। साकल्येन ऊनसप्ततिवत्सरवयसि २७
तस्य मरणं बभूव।

ततः परं लेमको द्व्यशीत्यधिकशतवत्सरवयसि २८
तस्य पुत्रे जाते भूम्याम् अस्माकं परिश्रमक्लेशयो जन-
यिता य ईश्वरस्याभिशाप आस्ते, तत्रास्माकम् एष २९
पुत्रः सान्त्वनां जनयिष्यतीति निश्चित्य लेमक् तस्य
पुत्रस्य नाम नोहं (अर्थात् सान्त्वयितेति) चकार। तस्य ३०
नोहस्य जन्मनः परं पञ्चनवत्यधिकानि पञ्चशतानि

३१ वर्षाणि जीवन् पुत्रान् कन्याश्च जनितवान्। लामकस्यातः
सप्तसप्तत्यधिकसप्तशतवत्सरवयसि तस्य मृति र्बभूव।
३२ पश्चात् नोहस्य पञ्चशतवत्सरवयसि सति शाम् हाम्
येफत् नामकास्तस्य त्रयः पुत्रा जज्ञिरे।

## ६ षष्ठोऽध्यायः।

१ अनुचितविवाहस्य कथनं ५ मानुषस्य दुष्टत्वात् शापन-कथनं ८ नोहवंशावलिः १४ अर्णवपोतनिर्म्माणकथनञ्च।

१ इत्थं मेदिन्यां मानवानां वृद्धौ सत्यां बहुलासु
२ कन्यासु च जातासु, ईश्वरीयलोका ऐहिकलोकानां
कन्याः परमसुन्दरीः समीक्ष्य स्वेच्छातः सर्व्वे जनाः
३ पाणिग्राहं कर्त्तुमारेभिरे। अतः परमेश्वरः कथयामास,
ममात्मा मनुष्यैः सार्द्धं सर्व्वदा नहि वत्स्यति, यतस्ते
पापेन मांसपिण्डमात्राः; तेषां जीवनकालाश्च केवलं
४ विंशत्यधिकशतवत्सरा भविष्यन्ति। तदानीं पृथिव्यां
महावीरा आसन्, तथेश्वरीयलोकानां वीर्य्याद् ऐहिक-
लोकानां कन्यानिवहस्य गर्भजाता अनेके सन्ताना
आसन्; ते पूर्व्वं पराक्रमिणो वीराः प्रसिद्धाश्चासन्।
५ अपरम् पृथिव्यां मानुषाणां नानात्याचाराः सर्व्वदा
मनःकल्पनोत्पत्तिं दृष्ट्वा ईश्वरो ददर्श; किञ्च परमे-
६ श्वरः पृथिव्यां मानुषस्य सृष्टत्वात् शोचन् मानसेऽनुतपन्

कथितवान्, अहं मानुषान् उरङ्गमान् पतङ्गांश्च अन्यान् ७
खेचरपक्षिप्रभृतीन् यान् यान् धरण्यां सृष्टवान्, तान्
सर्व्वानेव नाशयिष्यामि ; यत एषां सर्जनकारणात्
ममानुतापो भवति। किन्तु नोहः परमेश्वरस्यानुग्रह- ८
पात्रम् अभवत्।

नोहस्य वंशावलिविवरणं। स नोहः स्ववंशे साधु ९
र्धार्म्मिकश्च सन् ईश्वरस्य सहगाम्यासीत्। तथा शाम् १०
हाम् येफत् नामानस्तस्य त्रयः पुत्रा जज्ञिरे। अपरञ्च ११
ईश्वरस्य साक्षात् पृथिवी दुष्टा दौरात्म्येन पूर्णा च जाता।
पृथिवी दुष्टा पृथिवीस्थानां सर्व्वेषां प्राणिनां पन्थानश्च १२
सदोषाः, ईश्वरः पृथिवीं निरीक्ष्य तद् दृष्टवान्।
ततं ईश्वरो नोहमवदत्, मम गोचरे सर्व्वेषां मानु- १३
षाणाम् अन्तकाल उपस्थितवान्, यतस्तेषां दौरात्म्येन
पृथिव्याः परिपूर्णत्वात् अहं पृथिव्या साकं तान्
सर्व्वान् विनाशयिष्यामि। त्वं गोफरकाष्ठेन पोतमेकं १४
निर्म्माहि, तथा तस्य मध्ये कोष्ठानि कृत्वा तस्यान्तर्वहिश्च
सर्जरसेन लिम्प। तस्य दैर्घ्यं हस्तानां शतत्रयं, विस्तारः १५
पञ्चाशद्धस्तप्रमाणः, उच्चता च हस्तशतत्रयप्रमाणा
इत्थं तं निर्म्माहि। तस्योपरि हस्तैकाधो वातायनं १६
निर्म्माहि, तस्य पार्श्वे द्वारं कुरु, तथा तस्य प्रथमद्वितीय-

१७ हतीयकोष्ठानि निर्म्माहि। यतोऽहम् आकाशस्याधः-
स्थितान् सर्व्वप्राणिनो नाशयितुं पृथिवीम् अद्भिराप्लाव-
यिष्यामि, तेन पृथिव्याः सर्व्वप्राणिनः प्राणान् परित्य-
१८ क्ष्यन्ति। किन्तु त्वया सार्द्धम् अहं नियमं निर्णयामि;
तेन त्वं स्वपुत्रान् स्वभार्य्यां पुत्रवधूश्च सङ्गिनः कृत्वा
१९ पोतम् आरोक्ष्यसि। प्रतिजात्यनुसारतः सकल-
प्राणिनां स्त्रीपुरुषाणां युग्मानि समादाय प्राणरक्षार्थं
२० तानि स्वेन सह पोतमानय। फलतः पक्षिणां पशूनां
पृथिवीस्थोरोगामिनाञ्च द्वौ द्वौ स्वस्वजात्यनुसारतः
२१ स्वस्वप्राणरक्षार्थं तव समीपं गमिष्यतः। अपरं युष्माकम्
एतेषाञ्च भोजनार्थम् उपयुक्तद्रव्याणि समानीय स्वस-
२२ मीपे सञ्चिनु। ततो नोहस्तादृशं चकार, ईश्वरस्याज्ञा-
नुसारतएव सर्व्वाणि कर्म्माणि कृतवान्।

७ सप्तमोऽध्यायः।

१ पोतमारोढुं नोहं प्रतीश्वरस्याज्ञा ७ नोहस्य तस्य परि-
जनानां पश्वादीनाञ्च पोतारोहणं १७ प्लावनविवरणं।

१ ईश्वरो नोहं बभाषे, त्वं सपरिवारः पोतम् आ-
२ रोह, यत इदानीं त्वामेव साधुं पश्यामि। अतः पृथिव्यां
यथैतेषां वंशास्तिष्ठेयुः, तदर्थं शुचिपशूनां स्त्रीपुरु-
३ षाम् एकैकशः प्रतिजातिसप्तयुग्मानि, अशुचिपशू-

ग्राम्य स्त्रीपुरुषौ गृहीत्वा प्रतिजातिनी द्वे द्वे युग्मे, तथा
खेचरपक्षिणां स्त्रीपुरुषौ गृहीत्वा प्रतिजातिसप्त-
युग्मानि स्वेन सार्द्धं नय। यतः सप्ताहात् परम् अहं ४
चत्वारिंशत् दिवारात्रीः पृथिव्यां वर्षयिष्यामि, ततः
पृथिवीोस्थिता मया सृष्टाः सर्व्वे प्राणिनो विनंक्ष्यन्ति।
तदा नोहः परमेश्वरस्याज्ञानुसारतः सर्व्वाणि कर्म्माणि ५
कृतवान्। तस्य नोहस्य षट्शतवत्सरवयसि पृथिव्यां ६
जलाप्लावनं अभवत्।

ततो जलाप्लावनभयात् नोहस्तस्य भार्य्या तस्य पुत्राः ७
पुत्रबध्वश्च सर्व्वे पोतम् आरुरुहुः। तथा नोहं प्रतीश्वर- ८
स्याज्ञानुसारात् शुद्धाशुद्धपशुपक्षिभूचरोरोगामि- ९
जन्तवश्च स्त्रीपुरुषाः युग्मं युग्मं पोतमारुरुहुः। पश्चात् १०
सप्ताहे गते पृथिव्यां जलाप्लावनम् आरेभे। ततो नोहस्य ११
वयसः षट्शतवत्सराणां द्वितीयमासस्य सप्तदशदिने
महासमुद्रस्य सर्व्वाणि प्रस्रवणानि बभञ्जिरे, गगण-
स्थानि मेघद्वाराणि सर्व्वाणि च मुक्तानि। ततः पृथि- १२
व्यां चत्वारिंशत् दिवारात्रौ मुषलधाराभि र्वृष्टि
र्बभूव। तस्मिन् दिने नोहस्तस्य जाया, शाम् हाम् १३
येफत् नामकास्त्रयः पुत्राः पुत्रबध्वश्च पोतम्
आरुरुहुः। प्रतिजातिग्राम्यवन्यपशवः प्रतिजातीया १४

उरोगामिजन्तवः प्रतिजातीया भूचरखेचरपक्षिणश्च
१५ सर्व्वजीवजन्तूनां स्त्रीपुरुषा युग्मं युग्मं भूत्वा नोहस्य
१६ समीपे पोतम् आरोहन्। किन्तु ईश्वरस्याज्ञानुसारात्
सर्व्वप्राणिनां स्त्रीपुरुषाणां युग्मेषु समारूढेषु परमेश्वरो
द्वारं रुरोध।

१७ इत्थं पृथिव्यां चत्वारिंशद् दिनानि यावत् जला-
प्लावनं बभूव, तदानीम् अप्सु वृद्धासु पोतो भूर्द्द विहाय
१८ बभासे। ततः क्रमशः पृथिव्याम् अतीव जलवृद्धौ सत्यां
१९ पोतो जलेषु भासमानो जगाम। इत्थं पृथिव्यां जलमति
ववृधे; तत आकाशस्य नीचस्थाः सर्व्वे भूधरा ममज्जुः।
२० तदुपरि पञ्चदशहस्तान् यावत् जल उत्थिते सर्व्वे
२१ पर्व्वता अमज्जन्। तेन भूचराः सकलप्राणिनो मनुः
२२ फलतः पक्षिणो ग्राम्या वन्याश्च पशवः पृथिव्या उरोगा-
मिजन्तवो मनुष्याश्च शुष्कभूमिस्थिताः सकलप्राणि-
२३ नोऽम्रियन्त। इत्थं पृथिवीवासिनः सर्व्वप्राणिनः
अर्थतो मनुजा पशव उरङ्गमजन्तव आकाशीयाः सकल-
पक्षिणश्च विनेशुः; पृथिव्यां सर्व्वएव व्यनश्यन्, केवलं
२४ नोहस्तस्य सङ्गिनश्च पोतस्थाः प्राणिनो जिजीवुः। इत्थं
पृथिव्यां सार्द्धशतदिनानि यावत् आपस्तस्थुः।

---

८ अष्टमोऽध्यायः।

१ प्लावनस्य ह्रासः ६ द्रोणकाकस्योड्डायनं १० कपोतस्योड्डायनं १५ पोतादवरोहणमीश्वराज्ञा २० ईश्वरमुद्दिश्य नोहस्य हवनं तं प्रतीश्वरस्य प्रतिज्ञानं।

ततःपरम् ईश्वरो नोहं तस्य सङ्गिनः पोतस्थितान् १
पश्वादिसकलप्राणिनः स्मृत्वा पृथिव्यां प्रबलवायुं वाह-
यामास ततो जलं निववृते। अपरं महासमुद्रस्य प्रस्र- २
वणेषु वियतो मेघद्वारेषु च रुद्धेषु नभसो वर्षं निव-
वृते। ततः क्रमशस्तोयं वहत् सार्द्धशतदिनैर्ह्रास; ३
तदा सप्तममासस्य सप्तदशदिने आरारट् नाम्नि भूधरे
पोतो लगन् तस्थौ। अनन्तरं क्रमशो दशममासान् यावत् ४
तोयं वहत् स्तोकतरं बभूव; तस्य दशममासस्य प्रथमे- ५
ऽहनि महीध्राणां शृङ्गाणि ददृशिरे।

ततः पुनः चत्वारिंशद्दिनेषु गतेषु नोहः स्वनिर्म्मितस्य ६
पोतस्य वातायनं मोचयित्वा द्रोणकाकमेकम् उड्डाया-
मास। ततः स मेदिन्या अपशोषणं यावत् यातायातं ७
चकार। पश्चाद् नोहो भूम्या वारिह्रासं वेदितुं पुनः ८
कपोतं उड्डायाञ्चकार। तदा मह्यास्तोयाच्छादितत्वात् ९
स पदार्पणाय स्थानमलभमानः पुनरपि पोते तदभ्यासं
प्रत्याजगाम; तदा नोहो हस्तं विस्तार्य्य कपोतं धृत्वा
पोताभ्यन्तः स्वसमीपम् आनयत्।

१० ततोऽपरसप्ताहं विलम्ब्य नोहः पोतात् तं कपोतम्
११ उड्डाययाञ्चकार। ततः स चञ्च्वा जितवृक्षस्य पत्रमेकं
छित्वादाय सन्ध्यायां तस्य सन्निधिं प्रत्याययौ; ततः
१२ पृथिव्या अपां ह्रासो जात इति नोहो बुबुधे। अनन्तरम्
अपरैकसप्ताहे व्यतीते नोहेन सएव कपोत उड्डायाञ्चक्रे
१३ किन्तु स तन्निकटं पुनः परावृत्य नाजगाम। नोहस्य
वयसः षट्शतवत्सराणां परवत्सरस्य प्रथममासीय-
प्रथमदिने मेदिन्या अपशोषणं प्रचक्रमे; ततो नोहः
पोतस्योपरिभागं विमोच्य निरीक्ष्य भूमिं शुष्कां
१४ ददर्श। इत्थं द्वितीयमासस्य सप्तविंशे दिने पृथिवी
शुष्कतोया बभूव।

१५ ततःपरम् ईश्वरो नोहम् अवदत्, त्वमिदानीं
१६ स्वजायां पुत्रान् पुत्रवधूश्च सङ्गिनः कृत्वा पोताद्
१७ अवरोह। अपरं त्वया सार्द्धं ये ये पशुपक्षिपृथिव्यु-
रङ्गमप्रभृतयो जीवजन्तवः सन्ति, तान् सकलान् त्वया
सह बहिरानय, तेन ते धरण्यां बहवो भूयासुः धरण्यां
१८ प्रजावन्तो बहुवंशा भूयासुः। तदानीं नोहः स्वजाया
१९ पुत्रान् पुत्रवधूश्च गृहीत्वा पोताद् अवरुरोह। अपरं
स्वस्वजात्यनुसारतः सर्व्वे पशवः पक्षिण उरोगामिनः
सकलभूचरजन्तवश्च निर्ययुः।

तदनन्तरं नोहः परमेश्वरम् उद्दिश्य यज्ञवेदिं २०
निर्म्माय कतिचित् शुचिपशून् कतिचित् शुचिपक्षि-
णश्च गृहीत्वा वेद्या उपरि जुहाव। ततः परमेश्वरस्तस्य २१
सुरभिम् आघ्राय मनसि कथयामास, मनुष्याणां दौष्ट्यात्
पुनः पृथिवीं नाभिशप्स्ये; यद्यपि आबाल्यकालं मनुष्याणां
मनःकल्पना दुष्टा तथापि यथा समहार्षं, तथा पुनः
कदापि सकलान् प्राणिनो न संहरिष्यामि। यावत् २२
धरित्री तिष्ठति तावत् वपनस्य कर्त्तनस्य च समयः तथा
शीतं ग्रीष्मः शीतकालो ग्रीष्मकालश्च दिवा रात्रिश्च
एतेषां सर्व्वेषां निवृत्ति र्न भविष्यति।

## ९ नवमोऽध्यायः।

१ नोहं प्रतीश्वरस्याशीर्व्वचनं ८ नोहेन सार्द्धं ईश्वरस्य नियमस्थिरीकरणं १८ नोहस्य मत्ततादृष्टान्तः कनिष्ठ पुत्रस्य चाभिशापनं २८ नोहस्य मरणञ्च।

अनन्तरम् ईश्वरो नोहं तस्य पुत्रान् दत्त्वाशिषं १
जगाद, यूयं प्रजावन्तो बहुवंशाश्च भूत्वा मेदिनीं परि-
पूरयत। धरण्याः सर्व्वे पशवः खचरविहगा भूचरा २
उरङ्गमा जन्तवः सागरीयमीनाः सर्व्वे युष्मत्तो भीति-
मन्तः शङ्कावन्तश्च भविष्यन्ति, एते युष्माकं हस्तेषु
समर्पिता आसते। सर्व्वे गतिमन्तः प्राणिनो युष्माकं ३
भक्ष्या भविष्यन्ति, हरितौषधी इव युष्मभ्यम् एतान्
अदाम्। किन्तु सजीवनम् अर्थात् सशोणितं पललं ४

५ मा भुञ्जीध्वं। अहं युष्माकं जीवनरूपस्य शोणित-
पातस्य परिशोधं कारयिष्यामि; अहमेकैकपशुं
एकैकमनुष्यञ्च तत्परिशोधं कारयिष्यामि; प्रतिमानव-
६ मेव मनुजजीवनस्य परिशोधं कारयिष्यामि। यः
कश्चित् मानुषस्य शोणितं पातयिष्यति, मानुषेण तस्य
शोणितं पातयिष्यते; यतः परमेश्वरः स्वसादृश्येन
७ मनुष्यं सृष्टवान्। यूयं प्रजावन्तो बहुवंशाश्च भवत, किञ्च
धरायां बहुतरा भूत्वा वर्द्धिष्णवो भवत।

८ अपरम् ईश्वरो नोहं तस्य सङ्गिनः पुत्रांश्च बभाषे, पश्यत
९ युष्माभि र्युष्माकं भाविवंशैश्च युष्माकं सङ्गिभिः पोता-
१० न्निर्गतवद्भि र्ग्राम्यवन्यपशुभिः पक्षिप्रभृतिभिश्च पृथि-
वीस्थितैः सकलप्राणिभिश्च सह नियममहं स्थिरी-
११ करिष्यामि। अहं युष्माभिः सार्द्धम् एतं नियमं स्थिरी-
करोमि, जलाप्लावनात् सकलप्राणिनः पुन र्न विनं-
क्ष्यन्ति; पृथिव्यपि जलाप्लावनात् पुनः कदापि न विनं-
१२ क्ष्यति। ईश्वरोऽपरम् अकथयत्, अहं युष्माभिः सह
युष्माकं सङ्गिसकलप्राणिनां भाविवंशैश्च सह यं नियमं
१३ स्थिरीकरोमि, तस्येदमेकं चिह्नं स्थास्यति। अहं
जीमूते स्वीयं कोदण्डं स्थापयामि, तत् धरण्या साकं
१४ मदीयनियमस्य लक्ष्म भविष्यति। यस्मिन् समयेऽहं धरण्या

ऊर्द्धं पयोदान् सञ्चारयिष्यामि, किन्तु तत् पयोदका-
र्म्मुकं दर्शिष्यते, तस्मिन् काले युष्माभिः सार्द्धं सर्व्वप्रकार- १५
प्राणिभिश्च सार्द्धं ममायं नियम आस्ते, इति मया
संस्मृते सति सकलप्राणिविनाशाय पुन र्न जलाप्लावनं
भविष्यति। यतः पयोदकार्म्मुकं प्रति मम दृष्टौ जातायां १६
पृथिवीस्थितैः सकलप्राणिभिः समं मदीयचिरस्थायी
नियमोऽस्तीति मम स्मरणं भविष्यति। ईश्वरो नोहं १७
जगाद, क्षितिस्थितैः सकलप्राणिभिः साकं मया
स्थापितस्य नियमस्य लक्षणमिदं भविष्यति।

शाम् हाम् येफत् नामानो नोहस्य ये त्रयः पुत्राः १८
पोताद् वहिरागच्छन्, तेषां मध्ये हाम् किनान् वंशस्य
पूर्व्वपुरुष आसीत्। नोहस्यैतैस्त्रिभिः पुत्रैः सर्व्वा धरित्री १९
व्यानशे। अनन्तरं नोहः कृषिकर्म्मणि प्रवृत्तः सन् द्राक्षा २०
वृक्षान् रोपितवान्। ततः स द्राक्षारसं पीत्वा मत्तः सन् २१
दूष्यमध्ये विवस्त्रो भूत्वा निपपात। तदा किनानः २२
पिता हाम् स्वतातं नग्नं विलोक्य वहिः स्थितौ द्वौ
भ्रातरौ वार्त्तां बभाषे। तदानीं शाम्येफतौ स्ववसनं २३
गृहीत्वा स्कन्धे निधाय पश्चात् गत्वा नग्नं तातं
समाच्छादयामासतुः, तौ पश्चाद् गत्वा जनकस्य
नग्नतां न वीक्षाञ्चक्राते। ततः परं नोहो द्राक्षारसस्य २४

निद्रातः प्रबुध्य स्वीयकनिष्ठसुतस्य तदाचरणं विज्ञायाह,
२५ अभिशप्तः किनान् स्याच्च भ्रातृचेटकचेटकः।
२६ पुनस्तेनोक्तं। शामःप्रभुः परेशो यः स हि धन्यत्वमाप्नुयात्।
भविष्यति किनान्नामा शामास्यपरिचारकः॥
२७ येफतस्सान्ततिः सम्यग् ईश्वरेण विधास्यते।
दूष्ये वत्स्यति शामः स, तद्दासो भविता किनान्॥
२८ जलाप्लावनात् परं नोहः पुनः सार्द्धशतत्रयवत्सरान्
२९ अजीवत्। किन्तु नोहः साकल्यतः सार्द्धनवशतवत्सर-
वयसि प्राणान् तत्याज।

## १० दशमोऽध्यायः।

१ नोहस्य ज्येष्ठपुत्रस्य येफतो वंशावलिः ६ कनिष्ठपुत्रस्य हामो वंशावलिः २१ मध्यमपुत्रस्य शामो वंशावलिः।

१ तस्य नोहस्य शाम् हाम् येफत् नामकानां त्रयाणां
पुत्राणां वंशावलिः; जलाप्लावनात् परं तेषां एते
२ सकलपुत्रा जज्ञिरे। गोमर् माजूज् मादय् यूनान्
३ तूबल् मेशक् तीरस् एते येफतः पुत्राः। अस्किनस्
४ रीफत् तोगर्म, इमे गोमरः पुत्राः। इलीशा तर्शीश्
५ कित्तीम् दोदानीम्, इमे यूनानः पुत्राः। एतेभ्यो नानो-
पद्वीपीया देवपूजकाः स्थाने स्थाने व्यभजन् सर्व्वेषाञ्च
पृथक् पृथक् भाषावंशजातयो बभूवुः।
६ तथा कूश् मिसर् पुट् किनान्, इमे हामः पुत्राः।

शिवा हवीला सब्‌ता रयमा सब्‌तिका, इमे कूश: पुत्रा:। ७
रयमा: पुत्रौ शिवादिदनौ। अपरं कूश: पुत्रो निमोद् ८
पृथिवीमध्ये पराक्रमी भवितुम् आरभत। परमेश्वरस्य ९
साक्षात् पराक्रान्तो व्याधो बभूव; तस्मात् लोका अद्यापि
दृष्टान्तमिमं कथयन्ति, परमेश्वरस्य समक्षं निमोद:
सदृश: पराक्रमी व्याध:। किञ्च शिनियरि देशे बाबिल् १०
एरक् अक्कद् कल्‌नी, एतेषु सर्व्वेषु नगरेषु तस्य
प्रथमं राज्यं बभूव। स तत्स्थानात् अशूरियदेशं गत्वा ११
निनिवी रिहोबोत् केलह; निनिवी केलहो मध्यस्थितं १२
महानगरं रेषन्, एतानि नगराणि निर्ममे। अपरं १३
लूदीय अनामीय लिहावीय नप्तूहीय पथ्रुषीय, पिलि- १४
ष्टीयानाम् आदिपुरुष: कस्लूहीय, कप्तोरीय, एते सर्व्वे
मिस्र: पुत्रा:। तस्य किनानो ज्येष्ठ: पुत्र: सीदोन्, तत १५
परं हेत्, यिबूषीय इमोरीय गिर्गाशीय, हिव्वीय १६
अर्कीय सीनीय अर्वदीय सिमारीय हमातीया, एतै: १७
पुत्रै: किनान् देशो व्याप्त आसीत्। तत: सीदोनो गिरर् १८
दिशि असामारभ्य सिदोन् असीरा अद्मा सिबोयीम् १९
लेशां यावत् किनानीयानां निवासभूमिरासीत्। एते २०
सर्व्वे हामो वंशा:, किन्तु एतेषां मध्ये जातिकुल-
भाषादेशानां भेद आसीत्।

२१ ज्येष्ठो येफतो भ्राता शाम् इब्रीयलोकानां आदि-
२२ पुरुष आसीत्, तस्यापि पुत्राः पुत्र्यश्चासन्। एते तस्य
२३ वंशाः, एलम् अश्शुर अर्फक्षद् लूद् अराम्। अराम
२४ वंशा ऊष् हूल् गेथर् मश्। अर्फक्षदो वंशः शेलहः
२५ शेलहस्य पुत्र एबर्। एबरो द्वौ पुत्रौ एकस्य नाम
२६ पेलग् (अर्थात् भागः) यतस्तदानीं पृथिवी विभक्ताभवत;
२७ तस्य भ्रातु र्नाम यक्तन्। यक्तनः पुत्रा अल्मोदद् शेलफ्
२८ हत्सर्मावत् येरह हदोराम् ऊषल् दिक्ल ओबल् अबी-
२९ यामेल् शिवा ओफीर् हवीला योवब्, एते यक्तनो वंशाः।
३० आ मेषातः पूर्व्वदिशीयं सिफर्भूधरं यावत् तेषां वस-
३१ तिरासीत्। एते सर्व्वे शामो वंशाः; एषां मध्ये जाति-
३२ कुलभाषादेशानां भेद आसीत्। एषां कुलजात्यो र्भेदे
सत्यपि ते नोहस्य पुत्राणां वंश आसीत्; किन्तु जलाप्ला-
वनात् परम् एतेभ्यो नानाजातयः क्षितौ विभक्ता अभवन्।

११ एकादशोऽध्यायः।

१ बाबिलो निर्म्माणेन लोकानां भाषाया भेदनं १० शामो वंशावलिः १७ तेरहस्य वंशावलिः ३० तेरहस्य इब्रामो लोटस्य हारोणं प्रति गमनं तत्र तेरहस्य मरणञ्च।

१ पूर्व्वं वसुधास्थितानां सर्व्वेषां लोकानाम् एकैव भाषा
२ एकमेवोच्चारणम् आसीत्। पश्चात् लोकाः पूर्व्वदिशि
भ्रमन्तः शिनियरो देशस्य प्रान्तरमेकं प्राप्य तत्र न्यूषुः।

तदा परस्परं मन्त्रयाञ्चक्रुः, आगच्छत, वयं इष्टकानि ३
निर्म्माय उत्तमानि यथा स्युः, तथा दाहयामः; एतेन
तेषां पाषाणानां विनिमयात् इष्टकानि बभूवुः, चूर्णानां
विनिमयाच्च शिलाजतु बभूव। ततः परं कथयामासुः, ४
आगच्छत, वयं स्वार्थं नगरमेकं गगणस्पर्शि प्रोच्चं गृह-
मेकञ्च निर्म्मिमीमहे; ततोऽस्माकं कीर्त्ति र्भविष्यति
किञ्च वयं सर्व्वस्यां पृथिव्यां न विकरिष्यामहे। अन- ५
न्तरं ते मानुषा यन्नगरं गृहञ्च निर्म्मिमते, तद् वीक्षितुं
परमेश्वरोऽवरुरोह। परमेश्वरः कथयामास, पश्यत, सर्व्वे- ६
षाम् एतेषाम् एका जातिः भाषा चैषाम् एका, ते
कर्म्मण्यस्मिन् प्रवर्त्तन्ते; इदानीं यद्यत् कर्त्तुमिच्छन्ति,
तस्मात् न निवर्त्तिष्यन्ते। अतस्ते यथा स्वेषां भाषां ७
स्वयमेव बोद्धुं न शक्नुयुः तदर्थम् आगच्छत, वयं
अधस्तत्र गत्वा तेषां भाषाया भेदं जनयाम। इत्थं ८
परमेश्वरेण ते मेदिन्याः सर्व्वदिक्षु व्यकीर्य्यन्त ते च
नगरनिर्म्माणात् न्यवर्त्तन्त। इति कारणात् तस्या ९
नगर्य्या नाम बाबिल (अर्थता भेद) इत्यभवत्; यतः पर-
मेश्वरेण सर्व्वस्या मेदिन्या भाषाभेदं जनयित्वा तस्मात्
स्थानात् सर्व्वस्यां मह्यां व्यकीर्य्यन्त।

शामो वंशावलिः। जलाप्लावनात् परं वत्सरद्वये गते १०

सति शालो वत्सरशते वयसि कर्फक्षद्नामा तस्य
११ पुत्रोऽजायत। तस्य जन्मनः परं शाल् पञ्चशतानि
१२ वर्षाणि जीवन् पुनः पुत्रान् पुत्रींश्च जनयामास। किञ्च
अर्फक्षदः पञ्चत्रिंशद्वत्सरवयसि सति शेलहनामा तस्य
१३ पुत्रो जज्ञे। तस्य जन्मनः परं अर्फक्षद् त्र्यधिकचत्वा-
रिंशतानि वर्षाणि जीवन् पुनः पुत्रान् पुत्रींश्च जन-
१४ यामास। ततः शेलहस्त्रिंशद्वर्षवयसि सति एवर् नामा
१५ तस्यैकपुत्रो बभूव। तस्य जन्मनः परं शेलहः त्र्यधिक-
चतुःशतानि वर्षाणि जीवन् पुनः पुत्रान् पुत्रींश्च जनया-
१६ मास। तत एवरः चतुस्त्रिंशद्वर्षवयसि सति पेलग्नामा
१७ तस्य पुत्रो जज्ञे। तस्य जन्मनः परम् एवर् त्रिंशदधिक-
चतुःशतानि वर्षाणि जीवन् पुनः पुत्रान् पुत्रींश्चाजन-
१८ यत्। ततः पेलगस्त्रिंशद्वर्षवयसि सति रियूनामा तस्यैकः
१९ पुत्रोऽजायत। तस्य जन्मनः परं पेलग् नवाधिकवर्ष-
२० शतद्वयं जीवन् अपरपुत्रान् पुत्रींश्च जनयामास। ततो
रियुर्द्वात्रिंशद्वर्षवयसि सति सिरूग्नामा तस्यैकः पुत्रो-
२१ ऽजायत। तस्य जन्मनः परं रियू द्विशते वत्सरान् जीवन्
२२ अपरान् पुत्रान् पुत्रींश्चाजनयत्। ततः सिरूगस्त्रिं-
शद्वर्षवयसि सति नाहोर्नामा तस्यैकः पुत्रोऽजायत।
२३ तस्य जन्मनः परं सिरूग् द्विशते वत्सरान् जीवन् अपरान्

पुत्त्रान् पुत्त्रीश्च जनयामास। अपरं नाहोर उनत्रिंशद्वत् २४
सरवयसि सति तेरहनामा तस्यैकः पुत्त्रो जज्ञे। तस्य २५
जन्मनः परं नाहोर् उनविंशदधिकशतं वत्सरान्
जीवन् अपरान् पुत्त्रान् पुत्त्रीश्चाजनयत्। अपरं तेरहस्य २६
सप्ततिवत्सरवयसि सति इब्राम् नाहोर् हारन् नामानः तस्य चयः पुत्त्रा जज्ञिरे।

तेरहस्य वंशावलिः। तस्य तेरहस्य पुत्त्रा इब्राम् ना- २७
होर् हारन्। हारणः पुत्त्रो लोट् किन्तु हारन् आत्मनः २८
पितुः तेरहस्याग्रे स्वजन्मस्थाने कल्दीयानाम् ऊर्नामक
नगरे प्राणान् तत्याज। अनन्तरं इब्राम् नाहोरौ व्यूहतुः २९
इब्रामो जायाया नाम सारी, नाहोरो जायाया नाम
मिल्का। सा नाहोरो जाया मिल्का हारणः कन्यासीत्
स हारन् मिल्कायिस्कयो र्जनक आसीत्।

सा सारी बन्ध्याभवत्, तस्या अपत्यं न ज[illegible]म। ३०
अनन्तरं तेरह इब्राम् पुत्त्रं हारिणः पुत्त्रं लोट्नामक ३१
पौत्त्रम् इब्रामो जायां सारीनामिकां पुत्त्रवधूञ्च गृहीत्वा
कल्दीयानाम् ऊर्नामकनगरात् किनानदेशम्
उद्दिश्य गच्छन् हारन्नगरीं प्राप्य तत्रैव न्यवसत्।
ततः परं तेरहः तस्मिन् हारणि नगरे तिष्ठन् पञ्चाधिक- ३२
शतद्वयवत्सरवयसि प्राणान् अत्यजत्।

## १२ द्वादशोऽध्यायः ।

१ इब्रामं प्रतीश्वरस्याशीर्व्वदनं ४ इब्रामो हारणगमनं ६ किनान्देशे तस्य भ्रमणं १० दुर्भिक्षकारणात् तस्य मिसरगमनं १४ इब्रामो जायाया राज्ञा ग्रहणं पुनस्तस्मै दानञ्च ।

१ ततः परम् परमेश्वर इब्रामम् आचचचे, त्वं स्वदेशं ज्ञातिं
कुटुम्बं पैतृकगृहञ्च परित्यज्य यं देशमहं त्वां दर्शयामि,
२ तं देशं व्रज । अहं त्वत्तो महाजातिमेकाम् उत्पाद्य त्वाम्
आशिषं वदिष्यामि, तेन त्वं विख्यातो मङ्गलदाता च
३ भविष्यसि । अपरं ये तुभ्यम् आशिषं ददति, अहं तेभ्य
आशिषं दास्यामि; ये तुभ्यम् अभिशापं ददति, तेभ्योऽ-
हम् अभिशापं दास्यामि, त्वत्तो मेदिन्याः सर्व्वे वंशा
आशिषं प्राप्स्यन्ति ।

४ अनन्तरम् इब्राम् परमेश्वरस्याज्ञानुसारात् जगाम;
तदा लोट् च तेन सहितो जगाम ; इब्रामो हारणो
५ गमनकाले पञ्चसप्ततिवत्सरवय आसीत् । इत्थं इब्राम्
सारीं जायां भ्रातृपुत्रलोटं हारणि प्राप्तं स्वीयसञ्चित-
धनञ्च दासदासीनिवहञ्च समादाय किनान्देशं प्रति
यात्रां कृत्वा तं देशं प्राप्तवान् ।

६ अनन्तरं तस्मिन् देशे भ्रमन् शिखिमस्थानस्य
समीपस्थितं मोरिप्रान्तर प्राप्तवान् ; तदानीं किना-
नीयलोकास्तस्मिन् देशे न्यवसन ।

ततः परमेश्वर इब्रामं दर्शनं दत्त्वा जगाद, तव ७
वंशाय देशमिमं दास्याम्यहं; अत इब्राम् तस्मिन् स्थाने
दर्शनदातारं परमेश्वरम् उद्दिश्य यज्ञवेदिं निर्म्मित-
वान्। पश्चात् स तत्स्थानं परित्यज्य बैथेलः पूर्व्वदिशः ८
पर्व्वतं गत्वा दूष्यं स्थापयामास; तस्य पश्चिमे बैथेल्-
पूर्व्वदिशि अयनगरमासीत्; तत्रापि परमेश्वरम्
उद्दिश्य यज्ञवेदिं कृत्वा तस्य नाम्नि प्रार्थयाञ्चक्रे। ततः ९
परम् इब्राम् भ्रमन् ततो दक्षिणदेशं गतवान्।

तदानीं तस्मिन् देशे दुर्भिक्षस्य जातत्वात् इब्राम् १०
मिसर्देशे वस्तुं यात्रां चकार; यतः किनान्देशे
दुर्भिक्षम् अतीव ववृधे। अनन्तरं मिसर्देशं प्रवेष्टुम् ११
उद्यतः सन् इब्राम् निजजायां सारीं बभाषे, पश्य, त्वं
द्रष्टुं सुन्दरीत्यहं जानामि। एतत्कारणात् मिसरीय १२
लोकास्त्वां दृष्ट्वा मदीयजायेति विज्ञाय मां हत्वा
त्वां जीवन्तीं स्थापयिष्यन्ति। अतएवाहं विनये, त्वं मम १३
भगिनीति वद, तेन त्वया मम मङ्गलं भविष्यति, त्वया
मम प्राणाश्च रक्षिष्यन्ते।

अनन्तरम् इब्रामि मिसरं प्रविष्टे मिसरीय- १४
लोकास्तां नारीं परमसुन्दरीं ददृशुः। अपरं राज्ञो- १५
ध्यक्षास्तां निरीक्ष्य राज्ञः साक्षात् तां प्रशशंसुः; ततः सा

१६ नारी राज्ञो गृहम् आनिन्ये। तदा तन्निमित्तं नृप
इब्रामं समादृत्य तस्मै गोमेषगर्द्दभगर्द्दभीमहाङ्गादीन्
१७ दासीदासांश्च ददौ। किन्तु सा नारी इब्रामो भार्य्या,
तस्मात् परमेश्वरो राज्ञः सपरिवारस्य महाक्लेशं घटया-
१८ मास। अतो राजा तम् इब्रामम् आहूय बभाषे, मया
सह त्वया किं व्यवहृतं? एषा मम जायेति कुतो मह्यं
१९ नावादीस्त्वं? इयं मम भगिनीति कुतोऽवादीः? येनाहं
तां विवोढुं गृहीतवान्; इदानीं त्वं तां तव जायां गृहीत्वा
२० याहि। तदा राजाज्ञया भृत्याः सर्व्वस्वैः सार्द्धं तं तदीय-
जायाञ्च व्यसृजन्।

## १३ त्रयोदशोऽध्यायः।

१ इब्रामो लोटस्य मिसरदेशाद् गमनं, तेषां पालकानां विरोधः १० लोटः सिदोमगमनं १४ इब्रामं प्रतीश्वरस्य प्रतिज्ञा च।

१ तदनन्तरं इब्राम् तस्य जाया लोटं सकलसम्पत्तिञ्च
२ गृहीत्वा मिसरं प्रस्थाय दक्षिणदेशं प्राप्तवान्। स
इब्राम् पशुभिः स्वर्णरूप्यैश्च अतीव धनवान् आसीत्।
३ पश्चात् स पूर्व्वयात्रानुसारेण दक्षिणस्माद् बैथेलो दिशं
गच्छन् बैथेल् अयो र्मध्यवर्त्तिनि यस्मिन् स्थाने तस्य
४ दूष्यं स्थापितमासीत्, तत् स्थानम् उपस्थाय पूर्व्वं स्वनि-
र्म्मिताया यज्ञवेद्याः सन्निधौ परमेश्वरस्य नाम गृहीत्वा

प्रार्थयाञ्चक्रे। अपरम् इब्रामः सङ्गी यो लोट् तस्यापि ५
बहुमेषगोदूष्याणां विद्यमानत्वात् तस्मिन् देशे तयोः
सहवासो न समपद्यत। तयोः प्राज्यसम्पत्तेः सम्भवात् सह- ६
वस्तुं तौ न शेकतुः। यत इब्रामः पशुपालकानां लोटः ७
पशुपालकैः सार्कं परस्परविरोधो बभूव; तदानीं
तस्मिन् देशे किनानीयाः पिरिषीयाश्च मानुषा न्यव-
सन्। अत इब्राम् लोटम् अवदत्, अहं त्वां विनये, त्वं मम ८
ज्ञातिः, त्वया मया, तव पशुपालकैः मम पशुपालकैश्च
सार्द्धं विरोधो न भवतु। तव सम्मुखे किं समस्तदेशो ९
नास्ति? अतस्त्वां विनये, त्वं मत्तः पृथक् भव, त्वं वामं
याहि, अहं दक्षिणं यामि; यदा त्वं दक्षिणं याहि, अहं
वामं यामि।

तदा लोट् नेत्रे उन्मील्य ददर्श, सोयर्दिशि यर्द्दन- १०
नद्याः सकलप्रान्तरं परमेश्वरस्य उद्यानसमानं मिसर्-
देशइव सर्व्वत्र जलं स्थलञ्चात्तमं भवति; यतस्तदानीं
सिदोमम्अमोरौ परमेश्वरेण न नाशितौ। अतो लोट् ११
यर्द्दनः सकलप्रान्तरं मनोनीतं कृत्वा पूर्व्वदिशं प्रति
प्रतस्थे; इत्थं तौ परस्परं पृथक् बभूवतुः। तत इब्राम् १२
किनान्देशे न्युवास; अपरं लोट् तत्प्रान्तरस्थितानां
सर्व्वेषां नगराणां मध्ये सिदोम् नगरस्य समीपे दूष्यं

१३ स्थापयामास। तस्य सिदोमो लोका अतीव दुष्टाः पर-
मेश्वरस्य गोचरे महापापिष्ठाश्चाभवन्।
१४ इत्थं इब्रामो लोटि पृथक्भूते सति, परमेश्वर
इब्रामं बभाषे, त्वं नेत्रे उन्मील्य स्थानादस्मात् उत्तर-
१५ दक्षिणपूर्व्वपश्चिमान् वीक्षस्व। त्वं यावद् दूर द्रष्टुं
शक्नोषि, तावतीं भूमिं चिरकालार्थं तुभ्यं तव वंशाय
१६ च दास्यामि। अपरं पृथिव्या धूलिवत् तव वंशं वर्द्धं-
यिष्यामि; यदि कश्चित् धूलिं गणयितुं शक्नोति, तर्हि
१७ तेन तव वंशो गणयिष्यते। उत्तिष्ठ, देशस्यास्य दैर्घ्यं
१८ विस्तारञ्च भ्रम, तावतीं भूमिं तुभ्यं दास्यामि। तदानीम्
इब्राम् दूष्यमुत्थाप्य हिब्रोणः समीपस्थितं मम्रीनामकं
प्रान्तरं गत्वा न्युवास, किञ्च तत्र परमेश्वरम् उद्दिश्य
यज्ञवेदिं निर्म्ममे।

१४ चतुर्दशोऽध्यायः।

१ चतुर्भि र्नरपतिभिः सार्द्धं पञ्चानां भूपतीनां युद्धं १२ लोटो लोठनं परचक्रागतस्य इब्रामा पुनर्मोचनं १७ प्रत्यागमनकाले सिदोमो राज्ञा मल्कीषेदकराजस्य साक्षात्करणं तस्य कथाकथनञ्च।

१ अनन्तरं शिनियरोऽम्राफल्नामको राजा, इल्लास-
रोऽरियोक्नामको राजा, एलमः किदर्लायोमर्नाम-
२ को राजा, अन्यजातीयतिदियल्नामको राजा, चैत

सिद्दीमो विरानाम्ना राज्ञा सार्द्धं, अमोराया विर्शा-
नाम्ना राज्ञा सार्द्धं, अद्माया शिनाबनाम्ना राज्ञा सार्द्धं,
सिवोयिमः शिमेवर्नाम्ना राज्ञा सार्द्धं, सोयरोऽर्थतो
विलानाम्ना राज्ञा च सार्द्धं युयुधुः। तत्र सर्व्वे सि-
द्दीमः प्रान्तरेऽर्थतो लवणसागरेऽमिलन्। यस्मात् ते
द्वादशवत्सरान् यावत् तस्य किदर्लायोमर्भूपते-
र्वशीभूताः सन्तस्त्रयोदशे वत्सरे तस्यावशा अभवन्।
एतत्कारणात् चतुर्दशे वत्सरे किदर्लायोमर्राजा
निजसहायै राजभिः सहित आगत्य, अस्तिरोत्कर्ण-
यिम्देशीयान् रिफायीयलोकान् हाम्देशीयान् सुषी-
यलोकान् शाविकिरियाथयिम्देशीयान् एमीयलो-
कान् एल्पारण्प्रान्तरमारभ्य सेयीर्पर्व्वतनिवासिनो
होरीयलोकांश्च जिगाय। अपरञ्च ते तस्मात् परावृत्य ७
ऐण्मिस्पटोऽर्थतो कादेशो मध्येन गत्वा, अमालेकीय-
लोकानां कृत्स्नं देशं हत्सेसोन् तामर् निवासिन इमो-
रीयलोकान् पराजिग्युः। अनन्तरं सिद्दीम्राजा, अमोरा ८
राजा, अद्माराजा, सिवोयिम्राजा, विला अर्थतः
सोयर्राजा, चेमे पञ्चराजानो मिलित्वा एलम् ९
देशस्य किदर्लायोमर्राजेन सार्द्धं, अन्यजातीयानां ति-
दियल्राजेन सार्द्धं, शिनियरोऽम्राफल्राजेन सार्द्धं,

इल्लासरो अरियोक्राजेन सार्द्धं, सिद्दीमप्रान्तरे युद्धं
१० कर्त्तुमारेभिरे। तदा तस्मिन् सिद्दीमप्रान्तरे कर्द्दमस्य
खातानि आसन् ; ततः सिदोमघमोराराजानौ पलाय-
मानौ तेषां मध्ये पेततुः शेषाश्च पर्व्वतं प्रति पलायन्त।
११ तस्मात् ते सिदोमघमोरयोः सर्व्वसम्पत्तिं भक्ष्यद्रव्याणि
१२ च लोठयित्वा प्रतस्थिरे। अपरम् इब्रामो भ्रातृपुत्रं
सिदोम्निवासिनं तदीयां सर्व्वसम्पत्तिञ्च निन्युः।
१३ तदानीम् एकः पलाय्य इब्रीयम् इब्रामं वार्त्ताम्
अवदत्; तदा इब्राम् इष्कोल् आनेरश्च भ्राता इमो-
रीयस्य मम्रीप्रान्तरे न्यवसत् ; इब्रामस्ते च सहाया
१४ आसन्। ते स्वीयभ्रातृपुत्रं धृत्वा नीतवन्त, इति-
वार्त्तां श्रुत्वैव इब्राम् स्वगृहजातान् अष्टादशाधिकशत-
त्रयशिक्षितभृत्यान् सुसज्जान् कृत्वा अचूर्णां पश्चात् धा-
१५ वित्वा दान्नगरं यावत् गतवान्। अनन्तरं स्वभृत्यान्
द्विधा विभज्य रजन्यां वैरिणः प्रति आचक्रमे ; ततो
दम्मेषको वामस्थितं होबानगरं यावत् तेषां पश्चात्
१६ अधावत्। ततः सर्व्वसम्पत्तिं स्वभ्रातृपुत्रं लोटं योषितः
सम्पत्तिं लोकांश्च सर्व्वान् परावर्त्त्यानिनाय।
१७ इत्थं इब्राम् किदर्लायोमरं तस्य सहायभूपतींश्च
जित्वा प्रत्यागतवान्; तदा सिदोमो राजा तं साक्षात्

कर्त्तुं शारीप्रान्तरम् अर्थतो राज्ञः प्रान्तरं उपतस्थौ।
अपरञ्च सर्व्वोपरिस्थेश्वरस्य यष्टा मल्कीषेदक् नामा १८
शालमो राजा पूपान् द्राक्षारसञ्च नीत्वा इब्रामं इत्या-
शिषं जगाद, गगणपृथिव्योः स्वामी सर्व्वोपरिस्थ ईश्वर १९
इब्रामो मङ्गलं क्रियात्। सर्व्वोपरिस्थ ईश्वरो धन्यो २०
भवतु, स तव वैरिणस्तवैव हस्ते समर्पितवान्; तदानीम्
इब्राम् सर्व्वद्रव्याणां दशमांशं तस्मै ददौ। अनन्तरं २१
सिदोमो राजा इब्रामम् आपवे, त्वं सर्व्वां सम्पत्तिं
गृहाण, किन्तु लोकान मह्यं देहि। तत इब्राम् सिदोमो २२
राजानं प्रत्युवाच, गगणमेदिन्योः स्वामिनः सर्व्वोपरि-
स्थितस्य प्रभोः परमेश्वरस्य नाम्ना शपमानोऽहं कथयामि,
मम युवलोकै र्यद् अभोजि; अपरं मम सहकारिण २३
आनेर् इष्कोल् मसिम्र, एतेषां यो भागः प्राप्तव्यः तं
परित्यज्य यद्यदस्ति तत् त्वदीयं। अहम् इब्रामं धनिनं २४
अकार्षम्, एतां कथां यथा न वक्ष्यसि तदर्थं त्वदीयमेकं
सूत्रं उपानद्बन्धनरज्जुं वा नाहं ग्रहीष्यामि।

१५ पञ्चदशोऽध्यायः।

१ इब्रामोऽपत्यं दातुं तद्देशाय किनान्देशं दातुम् ईश्वरस्य
प्रतिज्ञानं ईश्वरम् उद्दिश्य इब्रामो बलिदानञ्च।

एतद्घटनासु सतीषु परमेश्वर इब्रामं स्वप्नदर्शने १

दर्शन दत्त्वा वाक्यमेतां बभाषे, हे इब्राम् मा भैषीः, अहं
२ तव फलकरूपो महापारितोषिकरूपश्च। तत इब्राम्
प्रत्यूचे, हे प्रभो परमेश्वर, त्वं मह्यं किं दास्यसि? अहं
३ स्वर्गम् अनपत्यः, किन्तु एतद्दम्मेषकीयइलीयेषर्-
४ नामको मम गृहस्य धनाधिकारी विद्यते। इब्राम् पुनर्-
वदत्, पश्य, मह्यम् अपत्यं नादाः, सुतरां मम गृहजातः
५ कोपि जनो ममोत्तराधिकारी भविष्यति। तदानीम्
परमेश्वर इब्रामं प्रति इति कथां कथयामास, स जन-
स्त्वदीयोत्तराधिकारी न भविष्यति; किन्तु यस्तवौ-
रसपुत्रो जनिष्यते, सएव त्वदीयोत्तराधिकारी भवि-
६ ष्यति। अनन्तरं स तं वहिरानीय जगाद, त्वम् अन्त-
रीक्षं निरीक्ष्य यदि नक्षत्राणि गणयितुं शक्नोषि, तर्हि
गणयन् ब्रूहि। सोऽपरमपि कथयामास, एतादृशस्तव
वंशो भविष्यति; तदानीं तस्मिन् परमेश्वरे विश्वसति
७ सति स तस्य विश्वसनं पुण्याय गणयाञ्चकार। ततः पर-
८ मेश्वरस्तस्मै कथयामास, यस्त्वाम् एतं देशम् अधिकार-
यितुं कम्दीयानाम् ऊर्नगराद् आनिनाय, सएव
९ परमेश्वरोऽहम्। तदा स बभाषे, हे प्रभो परमेश्वर, अहमेन
देशमधिकरिष्यामीति कथं ज्ञास्यामि? परमेश्वर आच-
चक्षे, त्वं त्रिहायणं गोवत्समेकं त्रिहायणीं छागीमेकां

ত্বা মামবমন্যতে; পরমেশ্বরএব ত্বাং মাঞ্চ বিচারয়তু।
তত ইব্রাম্ সারীং জগাদ, পশ্য, সা দাসী ত্বদীয়া তবৈব ৬
হস্তগতাস্তি;ত্বদিচ্ছানুসারেণ তাং প্রতি কুরু ; তদা সারী
হাজিরাং প্রতি কাঠিন্যং ব্যবজহার, ততঃ সা তস্যাঃ সমী-
পাত্ পলায়াঞ্চক্রে। ততঃ পরমেশ্বরস্য দূতঃ শূরঃ পথি ৭
মধ্যে প্রান্তরং কস্যচিত্ সজলকূপস্য সমীপে তাং নিরীক্ষ্য
প্রোবাচ, হে সার্য্যা দাসি হাজিরে, ত্বং কুত আগতাসি ?
কুত্র চ গমিষ্যসি ? ততঃ সা প্রত্যুবাচ, স্বস্বামিন্যাঃ ৮
সার্য্যাঃ সমীপাত্ পলায়েহম্। তদা পরমেশ্বরস্য ৯
দূতস্তাং জগাদ, ত্বং স্বস্বামিন্যাঃ সমীপং পরাবৃত্য
তস্যা বশীভব। পরমেশ্বরীয়দূতঃ পুনঃ প্রোবাচ, তব ১০
বংশোর বাহুল্যাত্ অগণ্যো যথা ভবেত্ তথাহং তং বর্দ্ধ-
য়িষ্যামি। পরমেশ্বরস্য দূতঃ পুনস্তাং বভাষে পশ্য তবো- ১১
দরাদ্ যঃ পুত্রো জনিষ্যতে, তদীয়ং নাম ইস্মায়েল্
(অর্থত ঈশ্বরঃ শৃণোতীতি) করিষ্যসি, যতঃ পরমে-
শ্বরস্তব দুঃখস্য কথাং শ্রুতবান্। সোঽবাধ্যঃ পুমান্ ১২
ভবিষ্যতি, তস্য হস্তঃ সর্ব্বেষাং বিরুদ্ধং স্থাস্যতি, সর্ব্বেষাং
হস্তাশ্চ তস্য বিরুদ্ধং স্থাস্যন্তি, স চ নিজভ্রাতৃণাং
পূর্ব্বদিশি নিবৎস্যতি। অপরঞ্চ হাজিরা স্বয়া সাকং ১৩
যঃ পরমেশ্বরঃ সংললাপ, তস্য নাম মহ্ঋক ইতি চক্রে।

१४ यतः सा कथयामास, किमहं मद्दर्शकं नादर्शम्? किञ्च
तस्य प्रहेः नाम बेर्लहयरोयी (अर्थतः स्वयंजीवी मद्-
दर्शकस्य प्रहिरिति) चक्रे। स प्रहिः कादेशबेरदो र्मध्ये
१५ विद्यते। अनन्तरं हाजिरया पुत्रे प्रसूते इब्राम् हा-
१६ जिरातो जातस्य तस्य पुत्रस्य नामधेयम् इस्मायेल्
इति चक्रे। इब्रामः षडशीतिवत्सरवयसि हाजिरा
इस्मायेलं प्रसुषुवे।

## १७ सप्तदशोऽध्यायः।

१ इब्राहिमा सहेश्वरस्य नियमस्थिरीकरणं तन्नियमस्य चिह्न त्वक्छेदः १५ सारायाः नामविनिमयः पुत्रप्रसवकथनं २३ इब्राहीमा इस्मायेल् प्रभृतीनां त्वक्छेदनञ्च।

१ इब्राम ऊनशततवत्सरवयसि परमेश्वरस्तं दर्शनं
दत्त्वा जगाद, सर्व्वशक्तिमान् ईश्वरोऽहं, मम समक्षं धर्म्म-
२ माचरन् सिद्धो भव। अहं त्वया सह स्वनियमं नि-
३ र्णेष्य तव वंशम् भृशं वर्द्धयिष्यामि। तदानीम्
इब्रामि अष्टाङ्गैः प्रणमति ईश्वरस्तेन सार्द्धम् आलप्य
४ कथितवान्, पश्याहमेव त्वया सहितः स्वीयनियमं
संप्रधारयामि, त्वं बहुजातीनाम् आदिपुरुषो भविष्य-
५ सि। किञ्च तव नामधेयम् इब्राम् (अर्थात् महापितेति)
पुनर्न स्थास्यति, किन्तु इब्राहीम् (अर्थात् बहुलोकानां
६ पितेति) नाम भविष्यति। यतोऽहं त्वां बहुजातीनामादि

पुरुषं कृत्वा तव वंशं भृशं वर्द्धयिष्यामि; किञ्च त्वत्तो
बहुजाती र्जनयिष्यामि, राजानस्त्वत्त उत्पत्स्यन्ते। अहं ७
त्वदर्थं तव भाविवंशार्थञ्च यं नियमं निर्णीतवान्, स
चिरस्थायी भविष्यति; ततोऽहं तव त्वदीयभाविवंशस्य
ईश्वरो भविष्यामि। अपरं त्वमिदानीं यस्मिन् किनान्- ८
देशे प्रवससि, निखिलमिमं देशं तुभ्यं तव भाविवंशाय
च चिरकालमधिकर्त्तुं दास्यामि; तेषामहम् ईश्वरो
भविष्यामि। पुनरीश्वर इब्राहीमं जगाद, त्वया त्वदीय- ९
भाविवंशेन च पुरुषपरम्परां यावत् मम नियमः पाल-
यिष्यते। त्वया सार्द्धं त्वदीयभाविवंशेन च सार्द्धं ममायं १०
यो नियमः तं यूयं पालयिष्यध्वे; युष्माकं सकलपुत्रा-
पत्यानां त्वक्छेदनं भविष्यति, युष्माभिः स्वस्वलिङ्गाग्र- ११
चर्म्मणि छिन्ने तद् युष्माभिः साकं मदीयनियमस्य
चिह्नं भविष्यति। युष्माकं पुरुषपरम्पराणां सर्व्वपुत्रा- १२
पत्यस्याष्टदिनवयसि त्वक्छेदनं भविष्यति, किञ्च तवा-
श्रमो विदेशीयो यः पुत्रस्तद्गृहजातो मूल्येन क्रीतो
वा भवति तस्यापि त्वक्छेदनं भविष्यति। तव गृह- १३
जातस्य मूल्येन क्रीतस्य वा बालकस्य त्वक्छेदनम् अवश्य
कर्त्तव्यं, तेन चिरकालार्थं युष्माकं मांसे मदीयनियम-
चिह्नं स्थास्यति। किन्तु यस्य पुत्रापत्यस्य लिङ्गाग्र- १४

धर्म्मच्छेदनं न भविष्यति, स मम नियमभञ्जनात् स्वलो-
कानां मध्यत उच्छेत्स्यते।
१५ तदनन्तरम् ईश्वर इब्राहीमं बभाषे, त्वं स्वजायां
सारी पुनः सारीं (अर्थात् कुलीनाम्) इत्युक्त्वा माह्वय
१६ तस्या नाम सारा (राज्ञीति) जातं। अहं तस्यै वरमिमं
ददामि, सा तव पुत्रमेकं प्रसविष्यति, तस्यै वरमिमञ्च
ददाम्यहं, सा नानाजातीनाम् आदिमाता भविष्यति,
किञ्च तस्या वंशे नानाजातीया राजान उत्पत्स्यन्ते।
१७ तदानीम् इब्राहीम् अष्टाङ्गप्रणतिं कृत्वा हसन् मनसि
कथितवान्, पुरुषस्य शतवत्सरवयसि पुत्रो जनिष्यते?
१८ नवतिवत्सरवयसि सारा किं पुत्रं प्रसविष्यति? तत
इब्राहीम् ईश्वरं जगाद, इस्मायेल् तव गोचरे जीवन्
१९ तिष्ठतु। तदा ईश्वरः कथयामास, तव जाया सारा
त्वदर्थं निश्चितं पुत्रं प्रसविष्यति, त्वञ्च तस्य नामं इस्-
हाक्(हास्य) इति करिष्यसे, अहन्तु तेन सार्द्धं तदीय-
भाविवंशेन च सार्द्धं चिरस्थायिनं नियमं निर्णेष्यामि
२० त्वदीयामिस्मायेलीयां प्रार्थनाञ्च श्रुतवानहं; पश्याहम्
आशिषा तं बहुप्रजं कृत्वा तदीयवंशम् भृशं वर्द्धयि-
ष्यामि; तस्माद् द्वादशराजान उत्पत्स्यन्ते, तमहं महा-
२१ जातिं करिष्यामि। किन्तु भविष्यद्वत्सरस्यास्मिन् काले

सारायां गर्भे य इस्हाक् जनिष्यते, तेन सार्द्धं स्वीय-
नियमं निर्णेष्याम्यहम्। इत्थं संलप्य ईश्वर इब्राहीमः २२
समीपाद् ऊर्द्धं जगाम।

अनन्तरम् इब्राहीम् इस्मायेलं पुत्रं स्वीयगृह- २३
जातान् मूल्येन क्रीतान् स्वगृहस्थितान् सकलान् पुरुषांश्च
गृहीत्वा ईश्वरस्याज्ञानुसारेण तस्मिन्नेव दिने सर्व्वेषां
लिङ्गाग्रचर्म्म चिच्छेद। इब्राहीम ऊनशतवत्सरवयसि २४
सति तदीयलिङ्गाग्रस्य त्वक्छेदनं बभूव। किञ्च तस्य २५
पुत्रस्येस्मायेलस्त्रयोदशवत्सरवयसि सति लिङ्गाग्रस्य
त्वक्छेदनं बभूव। इत्थम् इब्राहीमस्तस्य पुत्र इस्मायेल २६
एकस्मिन्नेव दिने त्वक्छेदनं बभूव। अपरं तस्य गृह- २७
जातानां मूल्येन क्रीतानाम् अन्यजातीयानां तस्य गृह-
जातानां सर्व्वेषां पुरुषाणामेव लिङ्गाग्रस्य त्वक्छेदनं
बभूव।

## १८ अष्टादशोऽध्यायः।

१ इब्राहीमः स्वर्गीयाणां त्रयाणां दूतानाम् आतिथ्यविधानं तैः सार्द्धं संलापनं १६ तान् मार्गं दर्शयितुं सिदोमदिशं प्रतीब्राहीमो गमनं १९ सिदोमारक्षार्थं इब्राहीमो निवेदनञ्च।

अनन्तरं निदाघसमये मम्रीप्रान्तरे इब्राहीम् १
स्वीयदूष्यगृहद्वारि समुपाविशत, एतस्मिन्नन्तरे पर-
मेश्वरस्तस्मिन्नेव स्थाने तस्मै दर्शनं ददौ। तदा स २

स्वलोचने उन्मील्य सम्मुखे समुपस्थितान् त्रीन् पुरुषान्
ददर्श ; किञ्च दृष्ट्वैव साक्षात् कर्त्तुं दूष्यद्वारात् वेगेन
३ गत्वा भूमिष्ठः सन् प्रणम्य कथयाञ्चकार, हे प्रभवो
निवेदयामि, यदि मां प्रत्यनुग्रहोऽस्ति तर्हि भृत्यस्यास्य
४ स्थानात् न यास्यथ। विनयेऽहं, अल्पतोयम् आनी-
यतां तेन पादान् प्रक्षाल्य पादपस्यास्य मूले विश्रा-
५ म्यत। अपरं किञ्चित् खाद्यं मयानीते तेन स्वस्वान्तः-
करणम् आप्याययध्वम्, पश्चाद् अयिष्यध्वे ; तद्धेतो
यूयं स्वदासस्य समीपम् आगताः ; तदानीं ते प्रत्यूचुः
६ त्वया यदुच्यते तदेव क्रियताम्। तत इब्राहीम् क्षिप्रं
दूष्यमध्ये साराया: समीपं गत्वा बभाषे, गोधूमचूर्णानां
द्रोटकत्रयं तोयेनाभिषिच्य चुल्ल्यां प्रतप्य तूर्णं पूपान्
७ कुरु। तत इब्राहीम् तूर्णं व्रजसमीपं गत्वा उत्तमं
कोमलं वत्सं गृहीत्वा भृत्याय ददौ ; स तं झटिति
८ पपाच। तदानीं दधि दुग्धं सिद्धं वत्सरसलञ्च समानीय
तेषां साक्षात् स्थापयामास ; किञ्च तेषां भोजनकाले
९ पादपमूले तेषां सन्निधौ तस्थौ। अनन्तरं ते तं पप्रच्छुः
तव जाया सारा कुत्र ; स कथयामास, पश्यत सा दूष्ये
१० विद्यते। तदा तेषामेकः पुरुष उवाच, अहम् आगामि
वत्सरस्यास्मिन् समयेऽवश्यमागमिष्यामि, पश्य तव जा-

याया: साराया: पुत्त्रएको जनिष्यते। एतां वाचं सारा
दूष्यद्वारात् पश्चात् तिष्ठन्ती शुश्राव। तदानीम् इब्रा- ११
हीम् सारा चातीव वृद्धावास्तां, साराया रजोऽपि
न्यवर्त्तत। ततः सारा हसन्ती मनसि बभाषे मम, मम १२
पत्युश्च वृद्धावस्थायां किमेतादृश आनन्दो भविष्यति ?
तदा परमेश्वर इब्राहीमम् आचख्यौ स्वीयवार्द्धक्यकाले १३
किं निश्चितं पुत्त्रो जनिष्यते इति चिन्तयित्वा सारया
कुतो हसितं ? परमेश्वरस्य किं कर्म्मासाध्यम् ? आगामिनो १४
वत्सरस्यास्मिन् समयेऽहं परावृत्यागमिष्यामि, तदा
साराया: पुत्त्रो भविष्यति। ततः सारा नाङ्गीकृत्य १५
बभाषे नाहमहासिषम् यतः सा विभयाञ्चकार। ततस्ते-
नोचे, सत्यं त्वमहासीः।

ततः परं ते पुमांस उत्थाय तस्मात् स्थानात् सिदो- १६
मोद्दिशं प्रतस्थिरे, पन्थानं दर्शयितुं इब्राहीम् सार्द्धं
वव्राज च। पश्चात् परमेश्वर उवाच, यत् कर्त्तुमहम् उद्य- १७
तोऽस्मि, तत् किम् इब्राहीमो गोपायिष्यामि ? इब्राहीमो
महती बलवती च जातिरेका जनिष्यते, धरिण्या: १८
सर्व्वा जातिस्तस्मात् मङ्गलं प्राप्स्यति। अहं तं जाना- १९
मि, स निजानि भाविन्यपत्यानि परिवारांश्च परमे-
श्वरीयवर्त्मनि चलितुं न्यायं धर्म्मञ्च कर्त्तुं आदेक्ष्यति ;

तेन इब्राहीमं प्रति परमेश्वरोक्ता प्रतिज्ञा सेत्स्यति।
२० परमेश्वरोऽपरमप्यवदत् अमोरोयः सिदोमीयश्च महा-
शब्द उत्तिष्ठति, तेषां पापम् अतीव गुरुतरं; तत्कारणा-
२१ दहं अधोद्रष्टुं गत्वा मत्सन्निधिमागतशब्दानुसारेण ते
सर्व्वथा कृतवन्तो नवेति वेदिष्यामि।
२२ पश्चात् ते पुमांसस्तस्मात् स्थानात् परावृत्य सिदोमो
दिशं जग्मुः; किन्तु इब्राहीम् परमेश्वरस्य समक्षं तदानीं
२३ अभ्युत्थित एव तस्थौ। तत इब्राहीम् समीपं गत्वा जगाद,
त्वं पापिभिः सार्द्धं धार्म्मिकानपि नाशयिष्यसि किं?
२४ नगरस्य मध्ये पञ्चाशत् जना धार्म्मिका भवितुं शक्नुव-
न्ति, तन्मध्यस्थितानां पञ्चाशत्धार्म्मिकानां कृते किं
२५ तत् स्थानं न रक्षन् विनाशयिष्यसि? पातकिभिः समं
धार्म्मिकानां विनाशनं कर्म्म त्वत्तो दूरे तिष्ठतु, धार्म्मि-
कानां पापिभिः समानकरणञ्च त्वत्तो दूरे तिष्ठतु।
२६ सर्व्वमेदिन्या विचारयिता किं न्यायं न करिष्यति? ततः
परमेश्वरः कथयामास, यद्यहं सिदोमनगरे पञ्चाशत्
जनान् धार्म्मिकान् पश्यामि, तर्हि तेषां निमित्तात् सर्व्वं
२७ स्थानं रक्षिष्यामि। तत इब्राहीम् कथयामास, पश्य,
२८ मयि धूलि भस्मसमानेपि सति प्रभुं प्रति कथां कथ-
यितुं उद्यतोऽस्मि। यदि पञ्चाशत् धार्म्मिकाः पञ्चोना

भवन्ति तर्हि पञ्चन्यूनत्वात् किं सर्व्वं नगरं विनाशयि-
ष्यसि ? तेन कथितं, पञ्चचत्वारिंशत्सु प्राप्तेष्वपि तदहं
न विनाशयिष्यामि। स तं पुनरवदत्, तत्र यदि चत्वा- २९
रिंशत् जना लभ्यन्ते ? तेनोक्तं, चत्वारिंशत्सु प्राप्तेष्वपि तन्न
करिष्यामि। पुनरपि स कथयामास, चेत् प्रभु र्न विर- ३०
क्ष्यति, तदा पुनः कथयामि; यदि तत्र त्रिंशत् जना
प्राप्यन्ते ? स उक्तवान्, त्रिंशज्जनेषु प्राप्तेष्वपि तन्न करि-
ष्यामि, स उवाच, पश्य, प्रभुं प्रति मया क्षोभरहितेन ३१
पुनरपि कथ्यते, यदि तत्र विंशति र्जना लभ्यन्ते ? स
उवाच, विंशतौ जनेषु प्राप्तेष्वपि तन्न नाशयिष्यामि।
एतेन प्रभु र्न क्रोत्स्यति, केवलमहं वारमेकं कथयामि, ३२
यदि तत्र दशजनाः प्राप्यन्ते ? स उवाच, दशसु जनेषु
प्राप्तेष्वपि तन्न नाशयिष्यामि। तदानीं परमेश्वर इब्रा- ३३
हीमा सार्द्धं इत्थं संलापं समाप्य प्रतस्थे, इब्राहीम् च
स्वस्थानं प्रतस्थे।

१९ ऊनविंशोऽध्यायः।

१ दूतद्वयस्य लोटः समीपागमनं, तौ प्रति सिदोमीयानां दुरा-
चरणं, लोटतत्कन्ययो रक्षणं, सिदोमीयलोकानां लोट-
क्रियाच विनाशनं २७ सिदोमो विनाशाद् इब्राहीमाद्
रक्षणं ३० लोटस्य कन्ययोश्च दुराचारात् मोयाबीयाम्मो-
नीयलोकानामुत्पत्तिश्च।

अनन्तरं सन्ध्याकाले स्वर्गीयदूतौ सिदोम नगर- १

मुपागतौ, तदा नगरद्वार्य्युपविष्टो लोट् तौ विलोक्य
समुत्थाय तौ साक्षात् चकार, भूमिलग्नशिराः प्रणम्य
२ कथयाञ्चकार च, हे मदीयप्रभवो विनयेऽहं, अद्य यामि-
न्याम् एतस्य दासस्य गेहमागत्य वसन्तु पादान् प्रक्षाल-
यन्तु च ; ततः प्रत्यूष उत्थाय गमिष्यन्ति । तदा
ते कथयामासुः नहि, वयं कृत्स्नां यामिनीं वर्त्मन्येव
३ स्थास्यामः। ततो लोटातीव यतिते ते परावर्त्य तेन समं
तदीयनिवेशनं प्रविविशुः; तदानीं स तेषां कृते किण्व-
हीनपूपादीनि खाद्यानि समासादयाञ्चक्रे, ते च बुभु-
४ जिरे। किन्तु तेषां शयनात् पूर्व्वं सिदोम् नगरीया
बालादिवृद्धपर्य्यन्ताः सकललोकाः चतुर्दिशः समागत्य
५ तस्य गेहमावृतवन्तः। किञ्च लोटमाहूय जगदुः, अद्य
यामिन्यां ये मनुजास्तव गेहं आगमन्, ते कुत्र? तान्
वहिरस्माकं समीपम् आनय, वयं तानुपगमिष्यामः।
६ तदा लोट् वहिरागत्य द्वारं रुद्ध्वा कथयामास, हे
७ भ्रातरो, विनयेऽहम् एतादृशं मा कुरुत। पश्यत, मम
८ द्वे अनूढकन्ये आसाते, ते युष्माकं समीपम् आनयामि
यूयं ताभ्यां समं यथेष्टाचारम् आचरत, किन्त्वेतौ मनुजौ
प्रति किमपि मा कार्ष्ट, यत एतौ मम गेहम् अभि-
९ श्रियतां। तदानीं ते कथयामासुः, अपसर; पुनरवदुः, एष

एको विदेशी मध्येऽस्माकं प्रवस्तुम् आगत्य अस्माकं
विचारयिता भवितुमिच्छति ; इदानीं तेभ्योऽप्यतीव
दुराचारं त्वां प्रति करिष्यामः ; ततस्ते लोटं प्रति समा-
क्राम्यन्तः कवाटं भंक्तुं जग्मुः। तदा तौ द्वौ लोकौ हस्तैः १०
स्वसमीपं गृहं लोटमाहृत्यानीय द्वारं रुरुधतुः, किन्तु ११
द्वारसमीपस्थान् क्षुद्रान् महतो वा लोकान् अन्धान्
चक्रुः ; ततस्ते द्वारम्अन्विच्छन्तः परिश्रश्रमुः। अनन्तरं १२
तौ मनुजौ लोटं कथयामासतुः; अस्मिन् नगरे त्वदीया
अपरे के के सन्ति ? पुत्राः पुत्र्यो जामातादयः ये ये
चार्था एतस्मिन नगरे सन्ति तान् सकलान् एतत्-
स्थानात् नय। यत आवाम् इदं स्थानमुत्छेत्स्यावः, पर- १३
मेश्वरस्य साक्षात् एतस्य नगरस्य महाध्वनिरुदतिष्ठत्।
अतः परमेश्वर एतन् नगरम् उच्छेत्तुं आवां प्रहितवान्
तदा लोट् वहिर्गत्वा तस्य कन्याभिः सार्द्धं कृतोद्वाहान् १४
जामातृन् उवाच, उत्तिष्ठत, अस्मात् स्थानात् वहिर्भवत,
परमेश्वर एतन्नगरं उच्छेत्स्यति; किन्तु तस्य जामातरः
तम् उपहासकमिव बुबुधिरे। अपरं प्रभाते सति दूतौ १५
त्वरया लोटं जगदतुः, उत्तिष्ठ, या स्वीया जाया, ये द्वे
कन्ये चात्रासते, तास्त्वं नय ; नो चेद् नगरीयदण्डेन
विनंक्ष्यसि। तथापि तस्मिन् विलम्बमालम्बमाने सति १६

परमेश्वरस्यानुग्रहात् तौ तस्य तद् जायायाः द्वयोः कन्य-
योश्च हस्तान् धृत्वा नगरस्य वहिर्नीत्वा ताः स्थापया-
१७ मासतुः। इत्थं तान् वहिः कृत्वा तयोरेको लोटं जगाद,
प्राणरक्षार्थं पलायस्व, पश्चात् न वीक्षस्व, किञ्च एषां प्रा-
न्तराणाम् मध्येपि मा तिष्ठ; पर्व्वतं पलायस्व, नो चेद्
१८ विनंक्ष्यसि। तदा लोट् प्रत्युवाच, हे मम प्रभो, इत्थं
१९ नहि; इदानीम् एतस्मिन् भृत्येऽनुग्रहम् दयाञ्च
कृत्वा प्राणान् अरक्षीः; अहं पर्व्वतं प्रति पलायितुं न
२० शक्नोमि; तत्र विपदि सत्यां म्रियेहं। पश्य, इदानीं
पलायितुम् अदो यन्नगरं निकटे वर्त्तते, तत् क्षुद्रमास्ते
तत् स्थानं प्रति पलायितुम् आज्ञापयतु, तत्र मम
प्राणा जीविष्यन्ति, तत् किं क्षुद्रस्थानं नहि? तस्मात
२१ तस्य स्थानस्य नाम सोयर् (क्षुद्रं) इत्यभवत्। ततः सोव-
दत्, भद्रं, त्वामनुगृह्य तदपि स्वीकरोमि, त्वया यन्नगर-
२२ निमित्तं प्रार्थ्यते तन्न नाशयिष्यामि। किन्तु क्षिप्रं
तत् स्थानं प्रति पलायस्व, यतस्त्वयि तत्र नोपस्थिते नाहं
२३ किमपि कर्त्तुं शक्ष्यामि। ततो लोटि सोयर्नगरं
२४ प्रविशति सति तस्मिन् भास्कर उदियाय। तदानीं
परमेश्वर आत्मनः फलत आकाशात् सिदोमनगर-
२५ योरुपरि सगन्धकाग्निं वृष्ट्वा तौ नगरौ सर्व्वप्रान्तरं

तन्नगरनिवासिनो नरान् तस्यां भूमौ जातं सर्व्वं वस्तु
च विनाशयामास। तदानीं लोटो जाया पश्चाद्दिशि २६
दर्शनात् लवणस्तम्भो बभूव।

अपरम् इब्राहीम् प्रातरेव समुत्थाय प्राक् यत्र २७
परमेश्वरस्य साक्षात् तस्थौ, तत्रोपस्थाय सिदोमसरो
तत्सर्व्वप्रान्तरभूमिञ्च प्रति वीक्षाञ्चक्रे, तदा तस्मा- २८
द्देशात् वह्निकुण्डस्य धूममिव धूमं उत्थातुं ददर्श।
किन्त्वीश्वरः तत्प्रान्तरस्थितानां सर्व्वनगराणां विनाश- २९
काले इब्राहीमं सस्मार, किञ्च लोटो वासस्थाननगरस्य
विनाशकवक्रे मध्यात् लोटं निर्गमयामास।

ततः परं लोट् सोयरि वस्तुं शङ्कमानस्तस्मान्निर्गत्य ३०
स्वीयदुहितृभ्यां सार्द्धं गिरौ न्युवास; ततः स तस्य द्वे
कन्ये च गुहायां ऊषुः। अनन्तरं तस्य ज्येष्ठा कन्या ३१
कनिष्ठां जगाद, आवयोः पिता वृद्धः, किञ्च सांसारिक-
व्यवहारानुसारेण आवामुपगन्तुम् अस्मिन् देशे कोपि
पुरुषो नास्ति। आगच्छावां पितरं गोस्तनीरसं पाय- ३२
याव पितुर्व्वंशरक्षार्थं तेन सार्द्धं शयावहै च। अपरं तस्यां ३३
रजन्यां ते स्वपितरं द्राक्षारसं पाययामासतुः तस्य
ज्येष्ठा कन्या गत्वा पित्रा सार्कं सुष्वाप च, किन्तु सा यत्
सुष्वाप उत्थाय जगाम च, तत् लोट् न बुबुधे। परे- ३४

ऽहनि सा ज्येष्ठा कनिष्ठामाह, पश्याहं गतरजन्यां पित्रा
सार्द्धम् अस्वपं; आगच्छावाम् यामिन्यामपि पितरं द्राक्षा-
रसं पायायावः ; ततस्त्वं पितुर्वंशरक्षार्थं गत्वा तेन सार्द्धं
२५ शेष्व। तदा तस्यां रजन्यामपि पितरं गोस्तनीरसं
पाययामासतुः, तस्य कनिष्ठा कन्या तेन सार्द्धं सुष्वाप च ;
किन्तु तया यत् शयितं उत्थाय गतञ्च तत् लोट् न
३६ विदामास। इत्थं लोटो द्वेएव कन्ये स्वपितृतो गर्भिण्यौ
३७ बभूवतुः। अनन्तरं ज्येष्ठा कन्या पुत्रं प्रसूय तस्य नाम
मोयाब् चक्रे, स इदानीन्तनानां मोयाबीयनराणाम्
३८ आदिपिता। कनिष्ठापि कन्या पुत्रं प्रसूय तस्य नाम
बिनम्मि चक्रे, स इदानीन्तनानाम् अम्मोनीयनराणाम्
आदिपिता।

२० विंशतितमोऽध्यायः।

१ इब्राहीमः स्वभार्य्याया भगिनीकथनात् तद्भार्य्याया अबी-मेलककर्तृकग्रहणं, स्वप्ने ईश्वरभर्त्सनात् इब्राहीमो याच्ञया दानञ्च।

१ अनन्तरम् इब्राहीम् तस्माद् दक्षिणदेशं प्रति
गत्वा कादेशशूरो मध्यस्थितगिवरप्रदेशं प्रविश्य न्यव-
२ सत्। किन्तु इब्राहीम् स्वजायां सारां प्रति कथया-
मास, सा मम भगिनी, इति कारणात् गिवरो राजा
२ अबीमेलेक् नरं प्रहित्य सारां जग्राह। ततो यामिन्याम्

ईश्वरः स्वप्ने निकषावीमेलेकं आगत्य जगाद, परिग्रहं
गृहीता योषित् तव मृत्युहेतुः, यतः सा स्वामिना-
ढा। किन्त्ववीमेलेक् तामनुपगत्य बभाषे, हे प्रभो ४
निर्दोषत्वेपि किं जातिमेकां विनाशयिष्यसि? एषा मम
भगिनीति कथां किं स पुमान् मह्यं नाकथयत्? किञ्च ५
ममैष भ्रातेति कथां किमेषा नाकथयत्? अतो मनसः
सारल्येन हस्तस्य निर्दोषत्वेन च कार्य्यमिदम् अकरवं।
तदानीम् ईश्वरः स्वप्ने तमाचख्यौ, त्वया मनसः सरल- ६
त्वेन कार्य्यमेतद् अकारीति विज्ञाय तां स्प्रष्टुं त्वां
निवार्य्य मद्विरुद्धं कलुषकरणात् त्वां न्यवर्त्तयम्। अत ७
इदानीं तस्य मनुजस्य जायां परावृत्य देहि, यतः स
भविष्यद्वक्ता; त्वन्निदानं प्रार्थयिष्यते, तेन त्वं जीविष्यसि;
यदि न ददासि तां, तर्हि त्वं सपरिवारोऽवश्यं मरि
ष्यसीति जानीहि। अनन्तरम् अवीमेलेक् प्रत्यूष उत्थाय ८
भृत्यानाहूय तान् सकलवृत्तान्तान् तेषां कर्णगोचरे
बभाषे तदा; तेऽतीव विभयाञ्चक्रुः। ततः परम् अवीमेलेक् ९
इब्राहीमम् आहूय जगाद, त्वयास्मान् प्रति किमिदं
व्यवहृतं? यत् त्वं मां प्रति मम प्रजाः प्रति च महाप-
राधं घटयितुम् ऐच्छः मया को दोषः कृतः? त्वं मां
प्रत्यकर्त्तव्यं कर्म्माकरोः। अवीमेलेक् इब्राहीमम् अपर- १०

मप्यवदत्, त्वं किं विलोक्य कर्म्मैतत् कृतवान्? तदानीम्
११ इब्राहीम् कथयामास, देशेऽस्मिन् ईश्वरात् किमपि भयं
न विद्यते, इमे मम पत्नीलोभात् मां विनाशयिष्यन्तीति
१२ मया शङ्कितं; किन्तु सा मम भगिन्यपि भवति, यतः सा
मम पितुः कन्या, नतु मातुः कन्या, किन्तु मम भार्य्या-
१३ भवत्। यदेश्वरो मां पैतृकात् गेहाद् भ्रामयत, तदा-
नीम् अहं तां भाषितवान्, त्वं मां प्रतीममनुग्रहं कुरु,
आवां यद्यत् स्थानं यास्यावः, तत्र तत्र ममायं भ्रातेति
१४ मां परिचाययिष्यसि। तदानीम् अबीमेलेक् मेषगो-
दासदासीरानाय्य इब्राहीमे ददौ, तदीयजायां साराञ्च
१५ तस्मिन् समर्पयामास। अनन्तरम् अबीमेलेक् जगाद,
पश्यैते देशास्तव गोचरा विद्यन्ते; तव यथेच्छा तत्र
२६ निवस। साराञ्च बभाषे, पश्य, त्वयान्यैः सर्व्वैश्च यद्
घटितं, तत् कारणात् तव भ्रात्रे सहस्रं रूप्यमुद्राः प्राय-
१७ श्चित्तदानं मयादीयन्त; इत्थम् अभर्त्स्यत सा। ततः
परम् इब्राहीमा ईश्वरे प्रार्थिते ईश्वरेणाबीमेलेक्
तस्य जाया तस्य दास्यश्च स्वस्था अक्रियन्त, ततस्ताः
१८ प्रासूयन्त। यतः परमेश्वर इब्राहीमो जायायाः
साराया हेतोः अबीमेलेको गेहस्थितानां गर्भान्
रोधयामास।

## २१ एकविंशतितमोऽध्यायः।

१ इस्हाको जननं स्तन्यत्यजनं ९ हाजिरायां दूरीकृतायां सत्यां दूतेन तस्याः रक्षणं २२ इब्राहीमा सार्द्धम् अबीमेलको नियमनिर्णयनं ३३ बेर्शेबायां इब्राहीमा प्रार्थनञ्च।

अपरं परमेश्वरः स्ववाक्यानुसारतः सारां साक्षात् १
कृत्य तां प्रति प्रतिज्ञां फलयामास। ततः सारा इब्रा- २
हीमो वार्द्धक्यएव गर्ब्भिणी भूत्वा ईश्वरेण निरूपित-
काले पुत्रं प्रसुषुवे। तदानीम् इब्राहीम् सारायाः ३
गर्ब्भजातस्य तस्य पुत्रस्य नामधेयम् इस्हाक् (हास्य)
इति चक्रे। तत ईश्वरादेशानुसारात् तत्पुत्रस्येस्हाको- ४
ऽष्टदिनवयसि त्वचं चिच्छेद। इब्राहीमः शतवत्सरवयसि ५
तस्य पुत्र इस्हाक् जज्ञे। अपरञ्च सारा कथयामास, ६
माम् ईश्वरोऽहासयत्, इति श्रुत्वा सर्व्वे माम् उद्दिश्य
हसिष्यन्ति। सा पुनः कथयामास, सारा किं पुत्रान् ७
स्तन्यं पाययिष्यति? इति वाचम् इब्राहीमं को वक्तुम्
अशक्नत्? यतोऽहं इदानीं तस्य वार्द्धक्ये पुत्रं प्रासूये।
अनन्तरं बाल एधित्वा स्तन्यं तत्याज; यदा चेस्हाक् ८
स्तन्यपानं तत्याज, तदा इब्राहीम् महाभोज्यम् आसा-
दयामास।

अनन्तरं मिसरीयहाजिराया गर्ब्भजात इब्राहीमः ९
पुत्रः परिहसति, तद् दृष्ट्वा सारा इब्राहीमं बभाषे, त्वम् १०

इमां दासीं अस्याः पुत्रञ्च अपसारय ; यत दासीपुत्रो
मत्पुत्रेणेस्हाकेन समं नोत्तराधिकारी भविष्यति।
११ किन्तु वाक्यमिमां निशम्य इब्राहीम् अतीवदुःखी बभूव,
१२ यतः सोपि तस्य पुत्र आसीत्। तदानीम् ईश्वर इब्रा-
हीमम् उवाच, स्वदास्याः दासीपुत्रस्य च निमित्तं त्वं
मा दुःखी भव ; सारा तुभ्यं यत् कथयति, तस्यास्तद्वाक्ये
मनो निधेहि ; यत इस्हाकस्तव वंशो विख्यास्यति।
१३ एष दासीपुत्रस्तव वंश, एतत्कारणात् तस्मादपि जाति-
१४ मेकाम् उत्पादयिष्यामि। अत इब्राहीम् प्रत्यूष उत्थाय
पूपान् तोयपूर्णां कुतूञ्च गृहीत्वा हाजिरायाः स्कन्धे
निदधे, बालकञ्च दत्त्वा तां विससर्ज। ततः सा प्रस्थाय
१५ बेर्शेबानामके प्रान्तरे बभ्राम। ततः परं कुत्वास्तोये
निःशेषे सति हाजिरा वृक्षतले बालं निधाय तस्य
१६ सम्मुखात् शरैकक्षेपाद् दूरं गत्वा समुपविवेश, किन्तु
यथाहं बालकस्य मृतिं न पश्येयमिति कथयित्वा
१७ बालकस्य सम्मुखात् दूरं उपविश्य प्रोच्चैः चक्रन्द। तदा-
नीम् ईश्वरो बालकस्य रवं शुश्राव, तदा तदीयदूतो
नभस आहूय हाजिरां जगाद, हे हाजिरे, तव किम-
१८ भूत् ? मा भैषीः, तत्र स्थाने स्थितस्य बालकस्य क्रन्दनम्
ईश्वर आकर्णयत्, त्वमुत्थाय बालकम् उत्थाप्य कराभ्यां

धारय; तस्मादहं महाजातिमेकाम् उत्पादयिष्यामि।
तदानीम् ईश्वरेण तस्य लोचने प्रसन्नीकृते सा सतोय- १९
प्रहिं ददर्श; तदन्तिकं गत्वा च तोयेन कुतूं पूरयित्वा-
नीय बालकं पाययामास। तत ईश्वरो बालकस्य सहायो २०
बभूव, ततः स क्रमश एधमानः प्रान्तरेऽवासात् धनुर्द्धरो
बभूव। किञ्च पारन्नाम्नि प्रान्तरे वसतिं चक्रे। अन- २१
न्तरं तस्य माता मिसरदेशीयां कन्यां तमुद्वाहयामास।

तस्मिन् काले अवीमेलेक् फीखोल् नामा तस्य २२
सेनापतिश्च इब्राहीमं व्याजहार, परमेश्वरः सकलकार्य्ये
तव सहाय आस्ते। अतस्त्वं मां प्रति मम पुत्रपौत्रांश्च २३
प्रति विश्वासघातित्वं माकार्षीः; किञ्च त्वां प्रति यथानु-
ग्रहं करोमि, तदनुसारेण मां प्रति तवेदानीं वासस्थान-
मेतं देशञ्च तथैवानुग्रहं करिष्यसीति वचनं मम सा-
क्षात् ईश्वरस्य शपथं कृत्वा ब्रूहि। तत इब्राहीम आच- २४
चक्षे, तमेव शपथं करिष्यामि। किन्त्ववीमेलेको भृत्या २५
इब्राहीमः सतोयं प्रहिं बलात् अध्यकुर्व्वन्, तस्मात्
इब्राहीम् अवीमेलकं भर्त्सयाञ्चक्रे। ततोऽवीमेलेक् २६
उवाच, कर्म्मैतत् केन कृतं तदहं न वेद्मि, त्वयाप्यहं न
विज्ञापितः, किञ्च केवलमद्याहं श्रुतवानेतत्। अनन्तरं २७
इब्राहीम् मेषान् गाश्च गृहीत्वा अवीमेलके प्रददौ

२८ किन्तु द्वौ नियममेकं स्थिरीकृतवन्तौ। अपरम् इब्रा-
हीम् अजात् सप्तमेषशावकान् पृथक् कृत्वा निदधे।
२९ तदानीम् अबीमेलक् तं पप्रच्छ, त्वया केनाशयेन सप्ते-
३० ते मेषशावकाः पृथक् निहिताः? इब्राहीम् प्रति जगाद,
मया यः प्रहिः खातः तस्य प्रमाणार्थं मत्त एतान् सप्त
३१ मेषशावकान् प्रति गृहाण। अतएव तस्य स्थानस्य नाम
बेर्शेबा शपथीयकूपइति जातं, यतस्तस्मिन् स्थाने उभाभ्यां
३२ शपथोऽकारि। इत्थं तौ बेर्शेबायां नियमं निर्णिन्यतुः,
तदानीम् अबीमेलक् तस्य सेनापतिः फीखोल् नामा
च उत्थाय पिलेष्टीयानां देशं प्रत्याजग्मतुः।
३३ अनन्तरम् इब्राहीम् तद् बेर्शेबायाः सन्निधौ उप-
वनं कृत्वा तन्मध्ये नित्यस्थायिनः प्रभोः परमेश्वरस्य
३४ नामनि प्रार्थयाञ्चक्रे, तत इब्राहीम् पिलेष्टीयानां देशे
बहुकालं प्रोवास।

## २२ द्वाविंशतितमोऽध्यायः।

१ इब्राहीमः स्वपुत्रमिस्हाकं बलिं दातुम् आज्ञापनं तस्य ग्रहणे ईश्वरीयदूतेन निषेधनं १५ तस्मात् कर्म्मणः ईश्वरस्याशीर्व्वचनं २० इब्राहीमो भ्रातुर्नाहोरो वंशराजिश्च।

१ एतासां घटनानां पश्चात् परमेश्वर इब्राहीमम् परी-
क्षितुम् उवाच, हे इब्राहीम्! ततः प्रतिजगाद, पश्या-
२ म्युपतिष्ठामि। तदानीं स कथितवान्, त्वं निजपुत्रम्

अर्थात् यस्मिन् अद्वितीयपुत्रे इस्हाकि प्रीणासि तं
गृहीत्वा मोरिया देशं याहि, किञ्च तत्रत्यं यं धरा-
धरं वदिष्याम्यहं, तस्मिन् धराधरे तं बलिं दत्वा
जुहुधि। तत इब्राहीम् प्रत्यूष उत्थाय गर्दभं सज्ज- ३
यित्वा द्वौ भृत्यौ पुत्रमिस्हाकञ्च सङ्गिनः कृतवान्;
किञ्च होमार्थं काष्ठे छिन्ने सति स उत्थाय ईश्वरेण
निर्दिष्टं स्थानं जगाम। अनन्तरं तृतीये दिवसे ४
इब्राहीम् लोचने उन्मील्यातिदूरात् तत् स्थानं ददर्श।
तदानीम् इब्राहीम् भृत्यान् अवदत्, यूयमत्र गर्द- ५
भेन सार्द्धं तिष्ठत; अहं बालकश्च द्वौ तत् स्थानं इत्वा-
राधयावः; ततः परं युष्माकं समीपम् आगमिष्यावः।
तदानीम् इब्राहीम् यज्ञकाष्ठम् आदाय स्वपुत्रस्य ६
इस्हाकः स्कन्धे निधाय करेण वह्निं असिञ्च गृहीत-
वान्; पश्चाद् उभौ मिलित्वा चेलतुः। अपरम् इस्हाक ७
स्वतातम् इब्राहीमम् आहूय जगाद, हे मत्तात! ततः
स प्रत्युवाच, हे मदात्मज, अहमुपतिष्ठामि। तदा स
पप्रच्छ, वह्निमिन्धनञ्च पश्य, किन्तु होतुं मेषशावकः
कुत्र? तत इब्राहीम् कथयाञ्चकार, हे मदात्मज होतुं ८
मेषशावकम् ईश्वरः स्वयं योजयिष्यति; पश्चाद् उभौ
मिलित्वा चेलतुः। अपरम् ईश्वरेण निर्दिष्टस्थानम् ९

उपस्थाय इब्राहीम् तत्र यज्ञवेदिं कृत्वा तदुपरि काष्ठं
सज्जयित्वा तस्य पुत्रमिस्हाकं बद्धा वेद्याः काष्ठोपरि
१० निदधे। तत इब्राहीम् करं प्रसार्य्य स्वपुत्रं हन्तुम् असिं
११ जग्राह। एतस्मिन्नन्तरे गगणात् परमेश्वरीयदूतः हे
इब्राहीम् हे इब्राहीम् इत्युक्त्वाहूतवान्; ततः स उवा-
१२ चाहम् उपतिष्ठामि। ततः स कथयामास, त्वमेतस्य
यूनः प्रतिकूलं करमुत्तुल्य तम्प्रति किमपि माकार्षीः;
यत ईश्वरं प्रति तव भीतिरस्तीति मया बुद्ध-
मिदानीं; यस्मात् त्वया मह्यं स्वीयमेकमात्रं तनयं
१३ दातुम् अनङ्गीकृतं नहि। तदनन्तरं इब्राहीम्
लोचने उन्मील्य दृष्टवान् तदा स्वपश्चात् स्तम्बस्थायां
वल्ल्यां बद्धशृङ्गं मेषमेकं वीक्षाञ्चक्रे; तत इब्राहीम्
गत्वा तं मेषं गृहीत्वा निजपुत्रस्य विनिमयात् होतुम्
उत्ससर्ज। किञ्च इब्राहीम् तस्य स्थानस्य नामधेयम्
१४ यिहोवा यिरि चकार। तस्माद् अद्यापि नरैरुच्यते
गिरौ परमेश्वरो योजयिष्यतीति।

१५ अपरञ्च परमेश्वरस्य दूत आकाशात् इब्राहीमं
१६ द्वितीयवारं आहूय जगाद, परमेश्वरः कथयति, त्वया
मह्यं स्वीयमेकमात्रं पुत्रं दातुम् अनङ्गीकृतं नहि।
१७ तदीयैतत्कार्य्यहेतोः स्वनाम्ना शपमानः कथयाम्यहं;

प्रविशतां सर्व्वेषां हेतीय सन्तानानां साक्षात् इब्राहीमं
प्रतिजगाद, भो मत्प्रभो, मदीयगिरं भवान् निशामयतु, ११
मया तत् स्थानं तत्रस्थां गुहाञ्च तुभ्यम् अदायि; अहं
स्वीयनराणां समक्षमेव तत् तुभ्यमदां, त्वया स्वीयमृत-
पत्नी श्मशाने निधीयताम्। तत इब्राहीम् तद्देशीय- १२
जनानां समक्षं प्रणम्य तद्देशीय जनानां कर्णगोचर १३
इफ्रोणं उवाच, यदि त्वं निश्चितं मह्यं तद् प्रयच्छसि,
तर्हि निवेदयामि, मदुक्तिम् आकर्णय। अहं तस्य
वप्रस्य मूल्यं वितरामि, त्वया तद् गृह्यतां, पश्चाद् अहं
तत्र स्थाने गतासुं जायां स्थापयिष्यामि। तत इफ्रोन् १४
इब्राहीमं प्रति व्याजहार, भो मम प्रभो, मद्वचनम् १५
आकर्णय, तस्या भूमेर्मूल्यं चतुःशतानि रूप्यमुद्रामात्रं,
ताभिस्तव मम च किं भवितुं शक्नोति? तस्मात् त्वया
स्वीयमृतभार्य्या श्मशाने निधीयताम्। इफ्रोण इमां १६
कथां निशम्य इब्राहीम् हेतः सन्तानानां कर्णगोचरे
इफ्रोणा गदितास्तदानीं वणिग्भिः परिचालिताः
चतुःशतरूप्यमुद्राः तुलया तुलित्वा इफ्रोणे प्रददौ।
अतो मम्र्याः पूर्व्वस्यां मक्पेलायाम् इफ्रोणो यः केदार १७
आसीत, तस्य मध्ये या गुहा तस्याश्चतुर्दिक्षु सीमायां ये
पादपाश्च तेषु सर्व्वेषु हेतः सन्तानानां समक्षं तन्नगर-

१८ निवासिनां समक्षञ्च इब्राहीमः स्वत्वं निरणायि। अन-
न्तरं मम्ब्याः पूर्व्वस्यां मक्पेलास्थानस्थितायां गुहायाम-
१९ इब्राहीम् स्वभार्य्यायाः साराया: श्मशानं विदधे। तत्
२० स्थानं किनानदेशस्य हिब्रोन् आस्ते इत्थं हेतःसन्तानैः
सा भूमि स्तन्मध्यस्थिता गुहा चेब्राहीमः श्मशानवेश्मार्थं
निरणायि।

२४ चतुर्व्विंशतितमोऽध्यायः।

१ इब्राहीमा स्वदासस्य शापनं १० तस्य दासस्य यानं प्रार्थनञ्च १५ रिबिका साक्षात्करणं ईश्वरस्य धन्यवादनं २८ लाबना तस्यातिथ्यकरणं ३१ तेन दासेन रिबिकाया याचनं तां दातुं लाबनबिथुयेलाभ्यां स्वीकार ५५ दासेन सार्द्धं रिबिकाया यानं ६२ इस्हाकः साक्षात्करणञ्च।

१ बहुतरवर्षवयस्कत्वाद् इब्राहीम् वृद्धतमो बभूव,
किन्तु परमेश्वर इब्राहीमे सर्व्वकर्म्मण्याशिषं ददौ; स
२ स्वगेहस्य सर्व्वकार्य्याध्यक्षं वृद्धदासं बभाषे, त्वमिदानीं त्वं
मम जङ्घायां हस्तं निधाय स्वर्गमर्त्त्ययोः प्रभोः परमेश्व-
३ रस्य नाम्ना मां प्रति शप, मम पुत्रो विवोढुं ममै-
तद्वासस्थानस्य किनानीयनराणां कन्यामगृहीत्वा मम
४ देशस्य ज्ञातीनां समीपं गत्वा मम पुत्रस्येस्हाकः कृते
५ कन्यामानेष्यसीति। तदानीं स दासस्तं जगाद यदि
कापि कन्या मया सार्द्धम् एतं देशम् आयातुं न सम्मन्यते

तर्हि त्वं यस्माद्देशादागतोऽसि तं देशं तव पुत्रं नेष्यामि?
तत इब्राहीम् कथयामास, सावहितो भव, मम पुत्रं तत्र ६
कदापि न नेष्यसि। यतः स्वर्गस्य प्रभुः परमेश्वरो मां ७
पैतृकात् सदनात् ज्ञातीनां मध्याच्च समानीय, त्वदीयान्व-
याय देशमिमं दास्याम्यहम्, इति शप्तवान्, अतः
तेन तवाग्रे निजदूते प्रेषिते सति त्वं मम पुत्रो विवोढुं
तस्मात् स्थानात् कन्यामेकां आनेष्यसि। किन्तु यदि ८
कापि कन्या तस्माद् देशाद् आयातुं नेच्छति, तर्हि
त्वं तस्मात् शपथात् मोक्ष्यसे; किन्तु मम पुत्रं तं देशं न
नेष्यसि। तदानीं स दासः स्वीयप्रभोरिब्राहीमो जङ्घायां ९
करं निधाय तदर्थं तथैव शशाप।

तदनन्तरं स दासः स्वप्रभो र्महाङ्गानां मध्यात् दश १०
महाङ्गान् प्रभो र्नानाविधसम्पत्तिश्च करे कृत्वा प्रस्थाय
अराम् नहरयिम् देशस्य नाहोर् नगरम् उपतस्थौ।
ततः सन्ध्यायां यदा कन्या अप उत्तोलयितुम् आग- ११
च्छन्ति तदानीं तस्य नगरस्य बहिः स्थितोदपानं
निकषा महाङ्गान् उपवेश्य स्थापितवान्, इदं प्रार्थयत
च। हे मम स्वामिन इब्राहीमः प्रभो परमेश्वर १२
प्रार्थयेऽहं, मम प्रभुमिब्राहीमं प्रत्यनुग्रहञ्च ममाद्य साक्षात्
कुरु। पश्याहमेतस्य प्रहेः समीप उत्तिष्ठन्नेव, नगर- १३

निवसतां याः कन्या अप उत्तोलयितुम् आयान्ति,
१४ तासां मध्यात् काञ्चन कन्यां स्वीयकलशमवरोह्य मामपः
पाययेति मयोच्यमाना सती सा यदि वदिष्यति पिब
तावकीनमहाङ्गानपि पाययिष्ये, तर्हि स्वीयदासस्येस्-
हाकः कृते या कन्या भवतान्यरूपि सैव सा भवतु, त्वं
मम प्रभुं प्रत्यनुग्रहीतवानिति तेनैवाहं ज्ञास्यामि।
१५ इमां कथां तस्मिन् कथयति सतीब्राहीमो नाहो-
राख्यस्य भ्रातुः पत्न्या मिल्काया गर्भजातो यो बिथूयेल्
तस्य दुहिता रिबका स्कन्धे कलशं वहन्ती बहिरा-
१६ जगाम। सा कन्यातीव सुन्दरी चानूढासीत्, केनापि
१७ पुंसा नोपभुक्ता च। सा प्रहिमवरुह्य कलशं पूरयित्वा
उपर्य्यायाति, तस्मिन्नेवावसरे स दासो धावन् तां
साक्षात्कृत्य कथितवान्, अहं विनये तव कलशात् किञ्चित्
१८ तोयं पातुं मह्यं देहि। ततः सा व्याजहार, भो महेच्छ,
पिब, इत्युक्त्वा सा कलशं करोपर्य्यवरोह्य पातुं तस्मै
१९ ददौ। किञ्च तं पाययित्वा कथितवती, यावत् सर्व्वे
महाङ्गा न पिबन्ति, तावत् अहं तेषां कृतेपि तोय-
२० मुत्तोलयिष्यामि। ततः सा शीघ्रं निपाने कलशस्य तोय-
मवतार्य्य पुनस्तोयमुत्तोलयितुं प्रहेः समीपं धावन्ती गत्वा
२१ सर्व्वेषां महाङ्गानां कृते तोयमुत्तोलयामास। ततः स

समीपं गत्वा मम पुत्रार्थं कन्यामानेष्यसि। ततोऽहं ३८
प्रभवेऽकथयं, यदि कापि कन्या मया सार्द्धं नागमि- ३९
ष्यति ? ततः सोऽकथयत्, अहं यस्य परमेश्वरस्य ४०
साक्षात् आचारामि, स त्वया सार्द्धं निजदूतं प्रहित्य
तव यात्रां सफलयिष्यति। ततस्त्वं मम पैतृकनिवे- ४१
शनस्य ज्ञातीनां मध्यात् मम पुत्रार्थं कन्यामानेष्यसि।
किन्तु ते चेत् कन्यां न दास्यन्ति, तदा त्वं शपथेन
मोक्ष्यसे ; मम ज्ञातीनां सन्निधिं गत्वैव त्वं शपथेन
मोक्ष्यसे। अतोऽद्याहं प्रहेः सन्निधिम् आगत्य प्रार्थये इदं ४२
हे मम स्वामिन इब्राहीमः प्रभो परमेश्वर, यदि मया
कृतां यात्रां सफलां कुर्य्याः तर्हि पश्य इदानीमेतस्य ४३
साम्बुप्रहेः सन्निधौ तिष्ठता मया सता या कन्या
तोयमुत्तोलयितुम् आयाति, तव कलशात् किञ्चित्
तोयं पातुं मह्यं देहीति विनीय प्रोच्यमाना सा यदि ४४
वदति, पिव तव महाङ्गानां कृतेऽपि तोयमुत्तोलयि-
ष्यामि, तर्हि यां कन्यां परमेश्वरो मम प्रभोः पुत्रकृते
निरूपितवान्, सैव सा भवतु। एतां कथां मनसि ४५
चिन्तितवानहं, तस्मिन्नेव काले रिबका स्कन्धे कलशं
गृहीत्वा वहिरागमत्, किन्तु तयावरुह्य प्रहेरुत्तोलि- ४६
तितेषु मया गदितं, विनयेऽहं मां तोयं पायय। ततः

सा क्षिप्रं स्कन्धात् कलशमवतार्य्य गदितवती, पिब तव
महाङ्गानपि पाययिष्यामि ; तदानीं मया तोये पीते
४७ सति सा महाङ्गान् अपाययत्। ततो मया साप्रच्छि,
त्वं कस्य कन्यासि? ततः प्रत्यवादीत् नाहोर् औरससुतो
मिल्कागर्ब्भजातो यो विथूयेल् तस्याहं दुहिता। तदाहं
तस्या नासिकायां स्वर्णाभरणं करयो र्वलयद्वयञ्च
पर्य्यधापयं। अपरं यस्तस्य पुत्रस्ते भ्रातुः कन्यां
ग्रहीतुं मां न्याय्यवर्त्मना नीतवान् तमिब्राहीमो मम
४८ स्वामिनः प्रभुं परमेश्वरम् अहं प्रह्वः सन् प्रणम्य
४९ धन्यमवादिषम्। अतो यदि यूयं साम्प्रतं यथार्थं
मम प्रभुमनुगृह्णीथ, तर्हि तद् ब्रूत ; यदि नहि
तदपि ब्रूत ; ततोऽहं दक्षिणं वामं वा यास्यामि।
५० तदा लाबन्विथूयेलौ प्रत्यूचतुः, परमेश्वराद् इयं
घटना जाता, तत्र वयं भद्रमभद्रं वा वक्तुं न शक्नुमः।
५१ पश्य रिब्केयं तव सम्मुखे तिष्ठति, एनां गृहीत्वा गम्यतां ;
तेन परमेशस्य वाक्यानुसारतः सा तव प्रभोः पुत्रस्य भार्य्या
५२ भवतु। तदानीम् इब्राहीमो भृत्यस्तयोरिमां कथां
५३ श्रुत्वा भूमिस्पृक्शिराः सन् परमेश्वरं प्रणनाम। तदा
स दास रूप्यसुवर्णपात्राणि वासांसि च वहिः कृत्वा
रिब्कायै ददौ, तस्या भ्रात्रे मात्रे च महार्घाणि द्रव्याणि

इत्तवान्। पश्चात् स तस्य सङ्गिनो अन्नाद्य भुक्त्वा पीत्वा ५४
तत्र निशायां न्यवसन्।

अनन्तरं तेषु प्रातः समुत्थाय स्थितेषु स दासः ५५
कथितवान्, मम प्रभोः समीपं गन्तुं मां विसृजत।
ततो रिव्काया भ्राता माता च जगाद, कन्येयम् अस्माकं
समीपे कतिपयदिनानि तिष्ठतु, यद्वा दश दिनानि
तिष्ठतु, पश्चात् सा गमिष्यति। किन्तु स तान् अवदत्, ५६
मां मा विलम्बयत, यतः परमेश्वरो मम यात्रां सफलीं
कृतवान्, इदानीं प्रभोः समीपं व्रजितुं मां विसृजत।
ततस्ते प्रतिबभाषिरे, वयं कन्यामाहूय तां पृच्छामः। ५७
ततस्ते रिव्काम् आह्वयन् अवदन् च, त्वं किमेतेन ५८
मानुषेण सार्द्धं व्रजिष्यसि ? ततः सावादीत्, यास्यामि।
तदानीं ते रिव्कां भगिनीं तस्या धात्रीं इब्राहीमो ५९
दासं तदीयमनुजांश्च विसृज्य रिव्काम् इत्याशिषं
जगदुः, त्वमस्माकं भगिनी, बहुसहस्त्रनराणां जननी भव, ६०
तव वंशः स्वशत्रूणां नगराण्यधिकरोतु। अनन्तरं रिव्का
तस्या दास्यश्च समुत्थाय महाङ्गान् आरुह्य तस्य मनु-
ष्यस्य पश्चात् जग्मुः। इत्थं स दासः रिव्कां गृहीत्वा ६१
प्रतस्थे।

अपरं इस्हाक् दक्षिणदेशे वसनात् बेर्लहयरोयीं ६२

६३ तस्मिन् स्थाने समुपस्थितवान्। स सन्ध्यायां ध्यातुं
केदारं जगाम। इति समये लोचने उन्मील्य वीक्ष्य
६४ महाङ्गान् आगच्छतो ददर्श। किन्तु रिबका लोचने
उन्मील्य इस्हाकं निरीक्ष्य महाङ्गात् अवरुरोह, ततस्तं
६५ दासेयं पप्रच्छ अस्माम् साक्षात् कर्त्तुं क्षेत्रमध्य आयाति
कोऽयं पुरुषः? ततो दासेयः कथयामास, मम प्रभुरयं।
अतो रिबका प्रच्छादनं गृहीत्वा स्वाम् आच्छादया-
६६ मास। अनन्तरं स दासेयः स्वकर्म्मणां सर्व्ववृत्तान्तं
६७ इस्हाकं जगाद। तदानीं इस्हाक रिबकां गृहीत्वा
सारायाः मातुर्दूष्यम् आनीय ताम् उद्वाह, तस्यां
प्रीतवांश्च मातृमरणजस्य शोकस्य सान्त्वनां लेभे।

२५ पञ्चविंशतितमोऽध्यायः।

१ किटूरया इब्राहीमो वंशराजिः तस्य मरणं श्मशाने स्थापनञ्च ११ इस्हाक प्रतीश्वरस्याशीर्वचनं १२ इस्मायेलो वंशराजिर्मरणञ्च १९ इस्हाको यमजपुत्रयो र्जननं २० एषौर्ज्येष्ठत्वपदाधिकारविक्रयश्च।

१ अनन्तरं इब्राहीम् किटूराभिधानाम् अपरां
२ जायाम् व्युवाह; तस्या गर्भे सिम्रन् यक्षन् मिदान
३ मिदियन् यिश्बक् शूह एते पुत्रा जज्ञिरे। किन्तु
४ तस्य यक्षन् शेबामी शिबा ददनौ जज्ञाते। तस्य ददनः
पुत्रो अशूरीयानां लिटूशियानां लियुम्मीयानाञ्चादि-

पुत्रश्च आसीत्। अपरं मिदियनः पुत्र ऐफा एफर्
हनोक् अवीद् इल्दाया एते सर्व्वे किटूराम्बयाः।
अनन्तरम् इब्राहीम् इस्हाके निजं सर्व्वस्वं प्रददौ, ५
किन्तूपपत्नीनां पुत्रेभ्यः किञ्चिद् दत्त्वा स्वीयजीवन- ६
दशायामेव इस्हाकः समीपात् तान् पूर्व्वदिकस्थे
पूर्व्वदेशे स्थातुं विससर्ज। इब्राहीम् पञ्चसप्त्यधिकशत- ७
वत्सरान् स्वीयजीवनकालान् यापयामास। ततः परं ८
वृद्धः पूर्णायुश्च सन् उत्तमवार्द्धक्ये प्राणान् परित्यज्य
निजलोकानां सन्निधौ समगच्छत। अपरं तस्य पुत्र ९
इस्हाक् इस्मायेल् मम्रेः पूर्व्वं हेतीयसोहरः पुत्रस्ये-
फ्रोणो भूमिस्थितमक्पेलागुहायां श्मशानवेश्मनि तं
स्थापयामास। यत इब्राहीम् हेतीयसन्तानेभ्यः तां १०
भूमिं क्रीतवान्; इब्राहीमस्तस्य जायायाश्च साराया-
स्तत्र स्थाने श्मशानं बभूव।

इब्राहीमो मृतौ सत्याम् ईश्वरस्तस्य पुत्रम् इस्हा- ११
कम् आशिषं जगाद; तत इस्हाक् बेर्लहयरोयी
नाम्नि स्थाने उवास।

साराया दास्या मिसरीयाया हाजिराया गर्भ- १२
जात इस्मायेल् नामा य इब्राहीमः पुत्र आसीत् तस्य
वंशराजिः। नामजन्मनोरनुसारात् इस्मायेलः सन्ता- १३

१४ नाम्नां नामान्येतानि। इस्मायेलो ज्येष्ठपुत्रो निबायोत्
१५ पश्चात् केदर् अद्बेल् मिवसम् मिश्म दूमा मसा
१६ हदर् तेमा यिटूर् नाफीश् केदिमा एते सर्व्वे इस्मा-
येलः पुत्राः ; तेषां नामानुसारात् नगराणि दुर्गाणि
१७ चासन्, ते च स्वस्वजात्यनुसारात् द्वादशाधिपतय
आसन्। अनन्तरम् इस्मायेलः सप्तत्रिंशदधिकशतवत्सर-
१८ वयसि प्राणान् परित्यज्य स्वीयलोकानां सन्निधौ सम-
गच्छत। ततः परं तस्य सकलभ्रातॄणां पूर्व्वदिशि
वासानुसारात् तदीयसन्ताना हवीलामिसरोः पूर्व्वस्यां
स्थितं शूरमवधिं कृत्वा अशूरीयाणां दिशि न्यवसन्।
१९ इब्राहीमः पुत्रस्येसहाको वंशराजिः। इब्राहीमः
२० पुत्र इस्हाक्, स इस्हाक् चत्वारिंशद्वत्सरवयसि अरा-
मीयस्य लावनो भगिनी पद्दन् अरामस्थस्य बिथूयेलः
२१ कन्या या रिब्का तां व्युवाह। किन्तु तस्या रिब्काया
बन्ध्यात्वात् तस्याः पुत्रजननार्थम् इस्हाक् परमेश्वरं
प्रार्थयाञ्चक्रे। ततः परमेश्वरेण तदीयप्रार्थनायां श्रुतायां,
२२ सत्यां तस्य जाया रिब्का गर्भिणी बभूव। अनन्तरं
तस्य गर्भमध्ये पुत्राभ्यां समालिङ्गने कृते सभैतादृशं
कुतोऽभवत्? ईदृशं किं भवति? इति चिन्तयित्वा सा
२३ परमेश्वरं प्रष्टुं जगाम। तदा परमेश्वरस्तां बभाषे, तव

गर्भे द्वे जाती आस्ताते, त्वदीयोदरात् द्विविधौ नरौ
निःसरिष्यतः; तयोरेक इतरस्मात् बलवान् भविष्यति,
ज्येष्ठश्च कनिष्ठं सेविष्यते। अनन्तरं प्रसूतिकाले सम्पूर्ण- २४
सति; तस्या जठरात् यमजपुत्रौ बभूवतुः। तयोर्ज्येष्ठो २५
रक्तवर्णोऽभवत् तस्य सर्व्वाङ्गानि लोमश्ववसनवत् आसन्।
तस्मात् तस्य नामधेयम् एषौ (लोमव्याप्त) इति चक्रे।
क्षणात् परं तस्य पादमूलं धृत्वा तस्यानुजो भूमिष्ठो २६
बभूव। तस्मात् तस्य नाम याकुब् (पदापहारक) इति
चक्रे। इस्हाकः षष्टि वत्सरवयसि सति पुत्रावेतौ
यमजौ बभूवतुः।

अनन्तरं बालकयोरेधमानयोः सतोः एषौ मृगया- २७
निपुणो काननवासी चाभवत्; किन्तु याकुब् मृदु
दूष्यनिवासी चाभवत्। मृगमांसस्यातिस्वादुत्वबोधात् २८
इस्हाक् एषौपुत्रे अप्रीयत किन्तु रिबका याकुबि
समप्रीयत। ततः परम् एकदा एषौः क्षेत्रादागत्य २९
समक्लाम्यत्, तदानीं याकुब् व्यञ्जनम् अपचत्। ततः स ३०
याकुबं जगाद निवेदयामि क्लान्तोस्म्यहं, रक्तेनानेन
व्यञ्जनेन मामाप्यायय। अतःकारणात् तस्य नामधेयम्
इदोम् (रक्त) इति विख्यातं। तदा याकुब् अवदत्, अद्य ३१
त्वं मयि स्वीयज्येष्ठाधिकारं विक्रीणीहि। एषौः प्रति-

जगाद पश्येदानीमहं म्रियमाणो ज्येष्ठाधिकारे मम
३३ किं प्रयोजनं? याकूब् उवाच त्वमद्य मम सन्निधौ शपथं
कुरु; ततस्तस्य समीपे शपथं कृत्वा निजज्येष्ठाधिकारं
३४ याकूबि व्यक्रीणात्। तदा याकूब् एषावे पूपं मसूरसूप-
रन्धितद्रव्यञ्च ददौ; स भुक्त्वा पीत्वा च जगाम। इत्थम्
एषौः स्वीयज्येष्ठाधिकारं तुच्छीचकार।

## २६ षड्विंशतितमोऽध्यायः।

१ दुर्भिक्षात् इस्हाको गिरर्नगरगमनं, तत्र स्वीयभार्याया भगिनीत्वकथनञ्च १२ इस्हाको सम्पत्तिः १७ कूपनिमित्तं दासानां विवादः बेर्शेबायां गमनञ्च २६ इस्हाका सार्द्धं अबीमेलको नियमनिर्बन्धः ३२ शपथकूपे: खननं ३४ एषवा विवाहेन पित्रो दुःखीकरणञ्च।

१ पूर्व्वम् इब्राहीमि विद्यमाने यादृशोऽभवत् तस्मिन्
देशे ततोपि दुर्भिक्षे उपस्थिते, इस्हाक् गिरर् नगरे
२ पिलेष्टीयानां राजानं अबीमेलकम् उपजगाम। पर-
मेश्वरः प्रत्यक्षीभूय तमवदत्, त्वं मिसरदेशं मा गाः,
३ यं देशमहं तुभ्यं कथयिष्यामि, तत्र निवस तत्र
प्रवस च; ततोऽहं तव सहायो भवन् त्वामाशिषं वदि-
ष्यामि; अपरं तुभ्यं तव वंशाय च तान् सर्व्वान् देशान्
दत्त्वा तव पितुरिब्राहीमः सन्निधौ स्वकृतशपथं सफलं
४ करिष्यामि। अहं गगणस्य तारागणवत् तव वंशम्

एधयित्वा तेभ्य एतान् देशान् दास्यामि, तव वंशेन
च मेदिनीस्थिताः सर्व्वजातय आशिषं लप्स्यन्ते। यत ५
इब्राहीम ममाज्ञां संमान्य मम विधानम् आज्ञां विधिं
व्यवस्थाञ्च अपालयत्। अनन्तरं इस्हाक् गिररि न्यव- ६
सत्। ततस्तत्स्थानस्थलोकैस्तस्य जायायाः परिचये पृष्टे
सोऽवदत् एषा मम भगिनी। यतो रिव्काया अतीव ७
सौन्दर्य्यात् तत्रत्यनराः तस्याः कृते मां हनिष्यन्तीति
कारणात् स तां भार्य्येति वक्तुं बिभयाञ्चकार। किन्तु ८
तत्र बहुकालमुषिते सति एकदा पिलेष्टीयभूपतिर-
बिमेलक् वातायनद्वारा निरीक्ष्य इस्हाकं स्वजायया
रिव्कया सार्द्धं क्रीडन्तं ददर्श। अतोऽबिमेलक् राजा ९
इस्हाकम् आहूय जगाद, सा नारी निश्चितं तव जाया;
तर्हि भगिनीति परिचयं कुतस्त्वं अवादीः? तदानीमि-
स्हाक् प्रतिजगाद, तस्याः कृते यथा मम मृत्यु र्न
जायते तदर्थमवादिषम्। तदानीम् अबिमेलक् कथ- १०
यामास, त्वयास्माभिः साकं किमिदं व्यवहृतम्? यदि
कश्चित् नरः तव जायया सार्द्धं निःशङ्कम् अशयिष्यत
तर्हि त्वमस्मान् दोषिणोऽकरिष्यः। अनन्तरम् अबी- ११
मेलक् सर्व्वान् मनुजान् प्रतीत्यादिदेश, यः कश्चित्
एनं मनुजं वा तस्य भार्यां स्प्रक्ष्यति स वध्यो भविष्यति।

१२ अनन्तरम् इस्हाक् तस्मिन् देशे कृषिं कृत्वा परमे-
१३ श्वरस्याशीर्व्वादात् तस्मिन्नेव वत्सरे शतगुणं लेभे। इत्थं
स धनी बभूव, क्रमश उन्नतिमेत्य महान् बभूव च।
१४ ततस्तस्य गोमेषाणां बहुव्रजा बहुदासा दास्यश्च
बभूवुः तेन पिलेष्टीया नरास्तं प्रतीर्ष्यितुमारेभिरे।
१५ अपरं तस्य तात इब्राहीमि विद्यमाने दासेया यान्
यान् प्रहीन् अखनन् पिलेष्टीयनरा मृद्भिस्तान् सर्व्वान्
१६ अपूरयन्। अनन्तरम् अवीमेलक् इस्हाकम् अवदत्
त्वमस्मत् समीपात् याहि, यतस्त्वम् अस्मत्तोऽतीव बल-
वान् भवसि।

१७ ततः परम् इस्हाक् तस्मात् यात्रां विधाय गिरर्
१८ उपत्यकायां दूष्यं स्थापयित्वा तत्र न्यवसत्। अपरम्
निजतात इब्राहीमि विद्यमाने ये ये प्रहयः खाता
इब्राहीमो मरणात् परं पिलेष्टीयैः पूरिताः तान्
सर्व्वान् इस्हाक् पुनः खनित्वा निजतातेन कृतनामानि
१९ पुनः कृतवान्। अपरम् इस्हाको दासेया स्तामुपत्यकां
२० खनित्वा स्रोतोवाहिनं प्रहिमेकं प्रापुः। ततो गिरर्-
नगरीयाः पशुपालका इस्हाकः पशुपालकैः सार्द्धं
विवदमाना अकथयन्, इदं तोयमस्माकं; तस्मात् इस्-
हाक् तस्य प्रहेर्नाम एषक (विवाद) इति कृतवान्, यतस्ते

२९ नियमश्च भवेत्। अस्मान् प्रति काञ्चन हिंसां न करि-
ष्यसि, यतो वयं त्वां नास्पृशाम, तव किमपि मङ्गलं किमपि
नाकुर्म, त्वां शान्त्या व्यसृजाम च, त्वमिदानीमपि परमे-
३० श्वरस्यानुग्रहपात्रमसि। तदानीमिस्हाक् तेषां कृते
३१ भोज्यमायादयत ते च बुभुजिरे पपुश्च। ततस्ते प्रत्यूष
उत्थाय परस्परं शपथं चक्रुः तत इस्हाका विसृष्टास्ते
क्षेमेण तस्मात् प्रतस्थिरे।

३२ अपरं तस्मिन्नेव दिने इस्हाको दासेया आगत्य
स्वखातकूपे तोयस्य निवेदयन्तस्तं जगदुः, तोयमस्माभि-
३३ रलम्भि। अतः स, तस्य कूपस्य नाम शेबा (शपथश्च)
इति कृतवान्, अद्य यावत् तन्नगरस्य नगरं बेर्शेबा-
नाम्ना विदितमास्ते।

३४ अनन्तरम् एषौः चत्वारिंशद्वत्सरवयस्कः हित्तीयबेरे-
र्यिह्रदीत् नामिकां कन्यां हित्तीयैलोनोऽपत्यां बासमत्
३५ नामिकां कन्याञ्च उद्वाह; किन्तु ते इस्हाकरिब्-
काययोर्मनोदुःखदायके बभूवतुः।

## २७ सप्तविंशोऽध्यायः।

१ मृगमांसार्थम् इस्हाका एषौप्रेषणं ६ याकूबं प्रति रिबकाया मन्त्रणा १४ रिबकाया मन्त्रणया याकूबः स्वपितरम् इस्हाकं धान्यं छलाशीः प्राप्तिः ३० मृगमांसमानीयाशिषं प्रार्थ्य एषावा चेष्टने कृते पितुरङ्गीकरणं ४१ एषावः क्रोधेन याकूबं हन्तुमिच्छा च।

अनन्तरम् इस्हाकि स्थविरे सति लोचनयो १
र्निस्तेजस्कत्वात् स्पष्टं द्रष्टुं न शशाक ; स स्वपुत्रं ज्येष्ठ-
मेषावमाहूय बभाषे, हे मम तनय ; ततः स प्रति-
जगाद, पश्याहम् उपस्थितोऽस्मि। तदानीम् इस्हाक् २
कथयामास, पश्याहम् इदानीं वर्षिष्ठोऽस्मि, कर्हि मम
मरणं भविष्यति, तदहं न जाने। अतस्त्वम् एतर्हि ३
तूणीरकोदण्डास्त्राणि गृहीत्वा वनं गत्वा मत्कृते
मृगमांसम् आनय। यादृशेऽहं प्रीये तादृशं सुस्वादु ४
खाद्यमाधाय मत्सन्निधिमानय ; ततोऽहं भुक्त्वा मरणात्
पूर्व्वमेव तुभ्यम् आशिषं प्रदास्यामि।

इस्हाका यदेतत् एषौतनयाय कथितं तत् रिब्का ५
शुश्राव। अत एषावि मृगमांसार्थं मृगयमाणो नेतुं ६
वनं गते सति रिब्का निजपुत्रं याकूबं जगाद, पश्य
तव पिता तव भ्रातरम् एषावम् एतां कथाम् अवादीत्,
त्वं मृगमांसं सुस्वादु खाद्यमाधायानय, ततोऽहं भुक्त्वा ७
मरणात् पूर्व्वं परमेश्वरस्य साक्षात् आशिषं तुभ्य

८ दास्यामि, तस्येदं वचोऽश्रौषं। अतो हे ममात्मज साम्प्र-
तम् अहं त्वां यद् आज्ञापयामि तन्मदीयं वचो निशा-
९ मय। त्वमिदानीं व्रजं व्रजित्वा तस्मात् उत्तमं छाग-
वत्सद्वयम् आनय, ततस्तव तातेन यादृशि प्रीयते तादृशं
१० सुस्वादु खाद्यमहं पक्ष्यामि। त्वं तदादाय निजतातस्य
सन्निधिं गमिष्यसि, ततस्तेन तत् खादित्वा मरणात्
११ पूर्व्वमेव तुभ्यमाशी र्वितरिष्यते। तदानीं याकूब् स्वप्रसूं
रिवकाम् आचचक्षे, पश्य मम अग्रजो एषौ लोमशः
१२ किन्तु निर्लोमाहं, तेन यदि तातो मां स्पृशन् प्रवञ्चकं
वेदिष्यति, तर्हि आशिषं न प्राप्य प्रत्युताभिशापेन
१३ परिवेष्ट्येऽहम्। किन्तु तस्य प्रसूरुवाच, हे तनय सोऽभि-
शापो मयि वर्त्ततां, केवलं मम वाक्यं मन्यमानो व्रजं
व्रजित्वा छागवत्सम् आनय।
१४ ततो याकूब् गत्वा तद् गृहीत्वा प्रसूसमीपम् आनि-
नाय; तत्प्रसूश्च तस्य तातो यादृशे प्रीयते तथा सुस्वादु
१५ खाद्यं पपाच। ततो रिवका ज्येष्ठपुत्रस्यैषावो गेहस्थितं
उत्तमवसनमानीय कनिष्ठतनयं याकूबं परिधापया-
१६ मास। अपरं तस्य छागस्य कृत्तिं गृहीत्वा तदीयकरौ
१७ गलदेशञ्चावेष्टत्। तत् सुपक्वं सुस्वादु खाद्यं पूपञ्च
१८ याकूबो हस्ते ददौ। तदानीं याकूब् स्वतातं उपागत्य

२७ हे सुत, साम्प्रतं समीपमेत्य मां चुम्ब। तदा तेन समीपं
प्रजिता तस्मिन् चुम्बिते सति तस्य वसनस्य गन्धम्
आघ्राय तमाशिषं ब्रुवन् अवोचत्, परमेश्वरस्याशीर्युक्त
२८ क्षेत्रस्येव मम तनयस्य सौगन्ध्यम्। अत ईश्वर आकाशीयं
शिशिरात् उर्व्वरायां भूमावुत्पन्नं प्रचुरं द्राक्षारसञ्च
२९ प्रसूतं तुभ्यं देयात्। नानानरास्त्वदधीना भूयासुः
नानाजातीयास्त्वां नम्यासुः स्वीयगोत्रमध्ये त्वं मुख्यो
भूयाः तव मातृतनयाश्च त्वां नम्यासुः यस्त्वाम् अभि-
शपेत सोभिशप्तो भूयात्, यश्च त्वामाशिषं भाषेत स
आशिषं प्राप्यात्।

३० इत्थं इस्हाका याकूबे आशिषि दत्तायां सत्यां
स्वपितुरिस्हाकः समक्षात् याकूबि बहिर्गतएव तस्य
अग्रज एषौ क्षेत्रात् आगत्य सुस्वादु खाद्यमादाय
३१ पितुः समीपमानीय कथयामास, हे पितस्त्वम् उत्तिष्ठ
३२ पुत्रानीतमृगमांसं भुक्त्वा मामाशिषं भाषस्व। तदा तस्य
तात इस्हाक् अब्रवीत्, कस्त्वं? सोऽवदत्, अहं तव
३३ ज्येष्ठपुत्र एषौः। तदानीम् इस्हाक् अतीवकम्पमान
उदितवान्, तर्हि यो मृगयामाणो मम सन्निधिं मृग-
पललम् आनैषीत् अहं तवागमनात् पूर्व्वमेव तदखादिषं
स कः? अहं तमाशिषम् अवादिषं, सएव आशीष्कः

खादिष्यति। तदानीम् एषौः पितुरीदृशीं वाचं निशम्य ३४
भृशं विलप्य व्याकुलचेता रोदितुम् आरभ्य, ताताय
कथयामास, हे पितः, आशिषं मह्यमपि देहि। तत ३५
इस्हाक् बभाषे, तव भ्राता आगत्य वञ्चयन् तव प्राप्त-
व्यामाशिषम् अग्रहीत्। तत एषौरुवाच, तदीयं नाम किं ३६
यथार्थं याकूब् नहि? यतः स वारद्वयं मामवञ्चयत्;
पश्य स पूर्व्वं मम ज्येष्ठाधिकारं गृहीतवान्, इदानी-
मपि मम प्राप्तव्यामाशिषम् अग्रहीत्; स पुनरवोचत्
किं मत्कृते त्वयैकाशीर्न स्थिता? तदानीम् इस्हाक् ३७
एषावं प्रतिबभाषे, पश्याहं तं तव प्रभुमकार्षं, तदीयं सकल-
कुटुम्बञ्च तदधीनीकृतवान्। अपरं तस्य प्रतिपालनार्थं
शस्यानि द्राक्षारसांश्च दत्तवान्; अतएव हे तनय,
त्वदर्थम् इदानीं किं कर्त्तुं शक्नोमि? तत एषौः पुनरपि ३८
स्वतातं जगाद, हे तात तव किं केवलम् एकाशी-
रासीत्? हे तात मह्यमप्याशिषं प्रयच्छ। इति ब्रुवन्
एषौरुच्चैः चक्रन्द। अनन्तरं तस्य तात इस्हाक् इमां ३९
वाचं गदितवान्, यस्मिन् देशे भूमिरुर्व्वरा न भवति,
गगनाच्च शिशिरो न पतति तस्मिन् देशे तव वसति
र्भविष्यति। त्वं खड्गधारव्यवसायेन कालं यापयि- ४०
ष्यसि, स्वसहजस्य निम्नीभविष्यसि च; यदा तु

तव प्रभुत्वं भविष्यति, तदा स्वीयग्रीवातः तस्य युगं
भंक्ष्यसि।
४१ एवं याकूब् स्वपितुर् आशिषम् अलभत, तस्मात्
एषौ रोषेण मनसा चिन्तयाञ्चकार, पितुरन्तकालः
प्रायेणोपतिष्ठति, ततः परं याकूबं भ्रातरं हनिष्यामि।
४२ किन्तु ज्येष्ठपुत्रस्यैषाव एतस्मिन् वाक्ये रिब्कायाः
कर्णगोचरीभूते, सा कनिष्ठसुतं याकूबं प्रति कथ-
यामास, पश्य तव अग्रजः एषौ त्वां हन्तुं मनसि निश्चित्य
सुस्थिर आस्ते। अतो हे ममात्मज, मद्वचनम् आकर्ण्य
४३ त्वं पलाय्य हारन्नगरस्थितस्य मम अग्रजस्य समीपं
४४ याहि। यावत् तव अग्रजस्य क्रोधो न निवर्त्तते
४५ तावत्कालं तत्र तिष्ठ। पश्चात् त्वां प्रति भ्रातुः क्रोधे
निवृत्ते, त्वं तं प्रति यत् कृतवान् तस्मिन् तेन विस्मृते
च सति, नरं प्रहित्य तत्स्थानात् त्वाम् आनेष्यामि;
४६ एकदा द्वौ युवां कुतो हारयिष्ये। ततो रिब्का इस्हाकं
जगाद, एतासु हित्तीयासु कन्यासु मम प्राणा व्याकुली-
भवन्ति, यदि याकूब् हित्तीयकन्यानाम् अर्थात् एत-
द्देशीयकन्यानां मध्यात् अनयोः तुल्यां काञ्चन कन्यां
विवहति, तर्हि मम प्राणधारणे किं सुखं।

---

अवश्यमीश्वरोऽस्ति, किन्त्वहं तन्नाज्ञासिषं। भयात् पर- १७
मपि व्याजहार, स्थानमिदं कीदृक् भयङ्करम्; इदं
स्थानमवश्यम् ईश्वरस्य भवनं स्वर्गद्वारस्वरूपञ्च।

अनन्तरं याकूब् प्रत्यूष उत्थाय उपधानार्थं यं पाषा- १८
णं निदधे तं स्तम्भरूपं संस्थाप्य तदुपरि तैलमसिञ्चत्।
तस्य स्थानस्य नाम बैथेलम् (ईश्वरभवनं) चकार; १९
किन्तु पूर्व्वं तस्य स्थानस्य नाम लूस् आसीत्। अपरं २०
स मनस्येतत् प्रतिज्ञातवान्, यदीश्वरो मम सहायः सन्
मम गन्तव्याध्वनि मां रक्षेत्, भोजनार्थम् अन्नं परि- २१
धानार्थं वसनं दद्यात्, पुनश्च क्षेमेण परावर्त्य पितृभव-
नम् आनयेच्च, तर्हि परमेश्वरो मम प्रभुर्भविष्यति,
मया च स्थापितस्यास्य स्तम्भरूपस्य पाषाणस्योपरि २२
ईश्वरीयभवनं निर्म्मापिष्यते, अपरं तेन मह्यं यत् किञ्चित्
दापिष्यते तस्य दशमांशम् अहं तस्मै दास्याम्येव।

२९ ऊनत्रिंशोऽध्यायः।

१ हारणदेशे याकूब् उपस्थानं ९ राहेलः समीपे परिचयदानं लाबनः सत्कारात् आतिथेयग्रहणञ्च १५ राहेलं प्राप्तुं सप्त वत्सरान् दास्यकर्म्मकरणं २१ भार्य्या राहेलस् विनिमयात् लेयां प्राप्य राहेलः कृते पुनश्च सप्तवत्सरान् दास्यकर्म्मकरणं ३१ लेयाया अपत्योत्पत्तिश्च।

ततः परं याकूब् गच्छन् पूर्व्वदेशम् उपस्थाय वीक्षा- १

२ ददर्श, मध्येप्रान्तरं प्रहेः समीपे मेषाणां त्रयोव्रजाः शयानाः
सन्ति; यतो लोकास्तस्य प्रहेरपः मेषान् पाययन्ति;
किन्तु तस्य प्रहेः समीपे सर्व्वेषां पशुव्रजानां मेलनं
यावत् तावत् तस्य प्रहेर्मुखे वृहत् पाषाण एक आच्छा-
३ दकस्तिष्ठति। अनन्तरं नरास्तस्मात् पाषाणम्
अपसार्य्य मेषव्रजान् अपः पाययन्ति, पुनरपि प्रहेरास्ये
४ पाषाणं निदधति। याकूब् तान् अपृच्छत्, हे भ्रातरो
युष्माकं निवासः कुत्र? ततस्ते प्रत्यूचुः हारण् नगर्य्यां।
५ तदा याकूब् पृष्टवान्, यूयं नाहोरः पौत्रं लावनं परिचि-
६ नुथ न वा? ते कथयामासुः, परिचिनुमः। याकूबा पृष्टं,
स क्षेमेण वर्त्तते? ते प्रत्यवोचन्, स क्षेमेण वर्त्तते; पश्यासौ
७ तदीया कन्या राहेल् मेषव्रजम् आदायायाति। तदा
याकूब् अवादीत्, इदानीमपि बहुवेला विद्यते, मेष-
प्रजानाम् एकत्र मेलनसमयो नाभूत्; यूयं मेषव्रजान्
८ अपः पाययित्वा पुनरपि चारयितुं नयत। किन्तु ते
कथयाञ्चक्रुः, सर्व्वे मेषव्रजा यावत् एकत्र न मिलन्ति,
यावत् प्रहेरास्यात् पाषाणं नापसारयन्ति तावत् वयं
तत् कर्त्तुं न शक्नुमः, तदा खल्वेव वयं मेषान् अपः
पाययिष्यामः।
९ याकूब् तैः सार्द्धम् इत्थं कथां कथयति तस्मिन्

तत्काले राहेल् लाबनः पितुः पशुव्रजम् आदाय
समुपस्थिता, यतः सा मेषपालिकासीत्। तदानीं १०
याकूब् मातुलस्य लाबनः कन्यां राहेलां तथा
पशुव्रजञ्च दृष्ट्वा समीपं गत्वा प्रहरामनात् पाषाणम्
अपसार्य्य मातुलस्य लाबनः पशुव्रजं तोयमपाययत्।
अनन्तरं याकूब् राहेलं चुम्बन् उच्चै रुरोद, ११
तस्याः पितुः कुटुम्बो रिब्कायाः पुत्र इति परि-
चाययामास च। तदा राहेल् द्रुतं गत्वा स्वतातं १२
वार्त्ताम् अवदत्। ततो लाबन् स्वभागिनेयस्य याकूबो १३
वार्त्तां श्रुत्वा तूर्णं तं साक्षात् कर्त्तुम् जगाम, तमालिङ्ग्य
चुम्बित्वा स्वभवनं निनाय च; पश्चात् निजागमनस्य
सर्व्ववृत्तान्तं लाबनं ज्ञापयामास। ततो लाबन् कथया- १४
मास, त्वं ममास्थिमांसस्वरूपोऽसि; ततो याकूब् तस्य
निवेशने मासमेकं अभिन्यवसत्।
अनन्तरं लाबन् याकूबं जगाद, त्वं कुटुम्बः सन्नपि १५
किं विना वेतनं मम दास्यकर्म्म करिष्यसि? तस्मात्
किं वेतनं ग्रहीष्यसि? तद् ब्रूहि। तस्य लाबनः द्वे १६
दुहितरौ आस्तां; तयो र्ज्येष्ठाया नाम लेया कनिष्ठाया
नाम राहेल्। लेया क्षिन्ननयनासीत् किन्तु राहेल् १७
रूपवती सुन्दरी चासीत्। याकूब् तस्यामप्रीयत १८

स प्रत्यवादीत्, तव कनिष्ठकन्याया राहेलः कृते सप्त-
१८ वत्सरान् दास्यं कर्म्म करिष्यामि। ततो लावन् उवाच,
अन्यपात्राय दानात् तुभ्यं दानमुत्तमं भवति, तस्मात्
२० मम सन्निधौ तिष्ठ। इत्थं स याकूब् राहेलः कृते सप्त
वत्सरान् दास्यं कर्म्म कृतवान्; राहेलं प्रति तस्य ता-
दृशोऽनुराग आसीत्, येन सप्त वत्सरा अपि तेनाल्प-
दिनवत् बुबुधिरे।

२१ अनन्तरं याकूब् लावनं जगाद, नियमितः कालो
मम सम्पूर्णोऽभूत्, इदानीं मम भार्य्यां मह्यं देहि, ताम-
२२ हम् उपैष्यामि। ततो लावन् तत्स्थान् सर्व्वजनान्
२३ आमन्त्र्य भोजयित्वा यामिन्यां निजदुहितरम् आनीय
२४ तस्मै दत्तवान्, तदा याकूब् तामुपजगाम। लावन्
निजकन्याया लेयाया दास्यकर्म्म कर्त्तुं सिल्पानामिकां
२५ स्वीयदासीं दत्तवान्। किन्तु प्रभाते सति सा लेयेति
दृष्ट्वा याकूब् लावनम् उक्तवान्, मया साकं त्वया
किमिदं व्यवहृतं? मया राहेलः कृते किं तव दास्यं
२६ कर्म्म नाकारि? तर्ह्यन्ते किमर्थं त्वयाहं वञ्चितः? तदा
लावन् अचकथत्, अत्र स्थानेऽस्माकं ज्येष्ठायामदत्तायां
२७ सत्यां कनिष्ठा न दातव्या। अत इदानीं तस्याः सप्त
दिनानि यापय, यदि पश्चात् अपरान् सप्तवत्सरान् मम

दास्यं कर्म्म करिष्यसि, तर्ह्यन्यां कन्यामपि तुभ्यं प्रदा-
स्यामि। ततो याकूब् तथैव कृतवान्, अर्थात् तस्याः सप्त- २८
दिनानि यापितवान्। अनन्तरं लावन् दुहितरं राहेलं २९
तं विवाहयामास; राहेलो दास्यकर्म्मकरणार्थं बिल्-
हानामिकां निजदासीं दत्तवान्। तदानीं स राहेलम् ३०
अभिजगाम; लेयातो राहेलि बहु प्रीतवान् राहेलः
कृते पुनः सप्त वत्सरान् दास्यं कर्म्म कृतवान्।

ततः परमेश्वरो लेयामवज्ञातां ज्ञात्वा तस्यै गर्भ- ३१
धारणशक्तिं दत्तवान्; किन्तु राहेल् वन्ध्या बभूव।
ततो लेया गर्भवती भूत्वा पुत्रं प्रसुषुवे, तस्य च नाम ३२
रूबेन् (पुत्रं पश्यतेति) कृतवान्, यतः सा कथयामास,
परमेश्वरो निश्चितं मम दुःखमपश्यत्; अतः पतिः
साम्प्रतं मयि प्रेष्यते। अपरं सा पुनर्गर्भवती सती पुत्रं ३३
प्रसूय गदितवती, अहमवमान्या विधे, परमेश्वर इति
ज्ञात्वा मह्यम् इमं तनयञ्च दत्तवान्, पश्चात् तस्य
नाम शिमियोनं (श्रवणं) चक्रे। पुनश्च सा गर्भ- ३४
वती सती पुत्रं प्रसूय कथितवती, एतावतो दिनात्
परं स्वामिना मयि समासंक्ष्यते, यतो मया तस्य त्रयः
सुताः प्रासूयन्त, तस्मात् तदीयं नाम लेविं (आसक्तं)
चक्रे। अनन्तरं पुनरपि तस्या गर्भे सति सा सुतं प्रसूय ३५

प्रोवाच, इदानीम् अहं परमेश्वरं प्रशंसामि ; तस्मात् तदीयं नाम यिहूदां (प्रशंसां) अकरोत् ; ततः परं तस्या गर्भो निवृत्ते।

## ३० त्रिंशत्तमोऽध्यायः।

१ लेयां प्रति राहेल ईर्ष्या १४ राहेलो दूदाफलप्रापणं १८ लेयायाः पुनरपत्यजननं २२ राहेलः सुतस्य यूषफो जननं २५ याकूबि पितृगृहं गन्तुमिच्छति तेन सार्द्धं लाबनो नियमनिर्णयनं ३७ सम्पत्तिमाप्तुं याकूब उपायचिन्तनञ्च।

१ अपरं स्वतो याकूबः सुतो न जातवान्, इति विलोक्य राहेल् भगिनीम् ईर्ष्यन्ती याकूबं जगाद, मह्यमपत्यं
२ देहि, नो चेदहं मरिष्यामि। तदा याकूब् राहेले प्रकुप्य प्रोवाच, त्वदीयगर्भफलं न्यवारि, येनेश्वरेण तस्य
३ किमहं प्रतिनिधिः? तदानीं राहेल् बभाषे, तर्हि मदीय दासीं बिल्हाम् उपेहि, तया पुत्रं प्रसूय मम क्रोडे
४ इत्थं तेनाहं पुत्रिणी भविष्यामि। एतत् कथयित्वा
५ सा स्वीयदासीं बिल्हां स्वस्वामिनं व्यवाहयत्। तदा याकूबि तामुपगते बिल्हा गर्भिणी सती याकूबः
६ सुतमेकं प्रसूतवती। तदानीं राहेल् अवादीत्, ईश्वरो मां प्रति न्यायमकार्षीत्, यतः स मम काकूक्तिं निशम्य मह्यं सुतमदात्; अतः सा तस्य नाम दानं (न्यायम्) अकु-
७ रुत। अनन्तरं राहेलो बिल्हा दासी पुनर्गर्भं धार-
८ यन्ती याकूबो द्वितीयं सुतं प्रसूतवती। तदानीं राहेल्

कथयामास; महायत्नेनाहं भगिन्या समं मल्लयुद्धं कृत्वा
जितवती; अतः सा तस्य नाम नप्तालिं (मल्लयुद्धं) कृत-
वती। अनन्तरं लेया स्वीयगर्भनिवृत्तिम् अवगम्य ९
स्वीयदासीं सिल्पानामिकाम् आनीय स्वस्वामिनं विवाह-
यामास। ततो लेयाया दास्याः सिल्पाया गर्भात् याकूबः १०
सुत एको जज्ञे। तदानीं लेया कथितवती निवहएक ११
आयाति, तस्मात् तस्य नाम गादं (निवहं) कृतवती।
अपरं लेयाया दासी सिल्पा याकूबो द्वितीयं सुतं १२
प्रसुषुवे। ततो लेया जगाद, धन्याहं सर्व्वा योषितो मां १३
धन्यां वदिष्यन्ति, तस्मात् सा तस्य नाम आशेरं (धन्यं)
चकार।

अपरं गोधूमकर्त्तनकाले रूवेन् वहि र्गत्वा क्षेत्रे १४
दूदाफलं प्राप्यानीय स्वजनन्यै लेयायै दत्तवान्; तदा
राहेल् लेयाम् अवदत्, तव सुतेनानीतानां दूदाफलानां
कानिचित् मह्यं देहि। ततः सा बभाषे, त्वया मम स्वामी १५
गृहीतः, इति किं क्षुद्रकार्य्यं? त्वं मम सुतस्य दूदा-
फलमपि जिघृक्षसि? तदा राहेल् जगाद, तव सुतस्य
दूदाफलविनिमयात् सोऽद्य यामिन्यां त्वया सह शयि-
ष्यते। तत्पश्चात् सन्ध्याकाले क्षेत्रात् याकूब आगमन- १६
काले लेया तं साक्षात् कर्त्तुं वहि र्गत्वा बभाषे, अद्य

यामिन्यां मया सह त्वया शयितव्यं यतोऽहं स्वसुतस्य
दूदाफलं दत्त्वा त्वां भाटकितवती; तस्मात् स तस्यां
१७ रजन्यां तया सार्द्धं शयीत। तत ईश्वरेण लेयायाः
प्रार्थनायां श्रुतायां सत्यां सा पुन र्गर्भिणी भूत्वा
१८ याकुबः पञ्चमं पुत्रं प्रसुषुवे। तदा लेया कथयामास,
मह्यम् ईश्वरो वेतनम् अददात्, यतो मया स्वामिने
दासी दत्ता तस्मात् सा तस्य नामधेयम् इषाखरं
(वेतनं) कृतवती।

१९ अनन्तरं लेया पुनरपि गर्भं धारयन्ती याकुबः
२० षष्ठं पुत्रं प्रसूतवती। तदा लेया कथयाञ्चकार, मह्यम्
ईश्वर उत्तमं यौतुकं दत्तवान्, इदानीं मम स्वामी
मया सार्द्धं वत्स्यति, यतो मत्तस्तस्य षट् सुता अजायन्त;
२१ तस्मात् सा तस्य नाम सिबूलून् (वासं) चकार। तत्पश्चात्
तस्याः सुतायां जातायां तस्या नाम सा दीणां कृतवती।

२२ अनन्तरम् ईश्वरो राहेलं स्मरन् तस्याः प्रार्थनां
२३ निशम्य गर्भधारणशक्तिम् अददात्। तदानीं तस्या गर्भे
मति सा सुतं प्रसूय कथितवती, ममापमानम् इदानीम्
२४ ईश्वरो दूरीकृतवान्। ततः सा तस्य नाम यूषफं (वृद्धिं)
कृत्वा कथितवती, परमेश्वरो मह्यम् अपरमेकं सुतं
ददातु।

अनन्तरं राहेलो यूषफि जातवति याकूब् लावनं २५
कथयाञ्चकार, स्वदेशे स्वस्थानं गन्तुं मां विसृज।
ययोः कृते तव दास्यं कर्म्मांहं अकरवं, मम ते योषिते २६
सुताश्च मयि समर्थ्य यातुमाहिष; यतो यथा तव दास्य
कर्म्म कृतवान्, तत् त्वं जानासि। तदानीं लावन् तस्मै २७
कथयामास, विनयेहं, त्वमिदानीं मय्यनुग्रहं कुरु, यतो-
ऽहम् अनुभवेन ज्ञातवान् केवलं तव कृतएव परमेश्वरो
मह्यम् आशिषं दत्तवान्। अतः स उक्तवान् स्वयमेव २८
त्वं यावत् वेतनं निरूपयिष्यसि, तावदेवाहं तुभ्यं
वितरिष्यामि। तदा याकूब् तस्मै कथितवान्, मया २९
यादृशं तव दास्यं कर्म्म कृतं, मम सन्निधौ तव पशवश्च
यादृग् विद्यन्ते, तदपि त्वया ज्ञायते। यतो मदागमनात् ३०
पूर्व्वं तव कनीयसी सम्पत्तिरासीत्; किन्तु साधुना
प्रभूताभूत्; मदागमनम् आरभ्य परमेश्वरेण तव मङ्गलं
व्यधायि; किन्तु मया निजपरिजनाय कदा सञ्चेष्यते?
ततो लावन् कथितवान्, तुभ्यमहं किं दास्यामि? याकूब् ३१
अवदत्, त्वं मह्यं किमपि न दत्त्वा यदि मां प्रति कर्म्मैतत्
करोषि, तर्हि तव पशून् पुनरहं चारयित्वा पालयि-
ष्यामि। अद्य मया तव सर्व्वेषां पशुव्रजानां मध्यं गत्वा ३२
कर्व्वुरवर्णा विचित्रा गवादयः कपिशवर्णा मेषाः

विचित्राः कर्ब्बुरवर्णाः छागाश्च पृथक् करिष्यन्ते;
३३ ते सर्व्वे मम वेतनरूपा भविष्यन्ति। इतः परं यदा तत्र
समयं मम वेतनमुपस्थास्यति, तदानीं मम न्यायस्य
प्रमाणमेकं भविष्यति; तत्र यदि छागानां मध्ये कर्ब्बुर-
वर्णान् विचित्रांश्च भिन्ना मेषाणां मध्ये धूमलवर्णान्
अन्ये तिष्ठन्ति, तर्हि ते मम तास्कर्य्यरूपेण गण्या भवि-
३४ ष्यन्ति। तदानीं लावन् उवाच, भद्रं, तव वचनानु-
३५ सारादेव भविष्यतीति। अपरं स तद्दिनएव विन्दु-
विचित्रान् कर्ब्बुरवर्णांश्च छागान्, सर्व्वाः विचित्राः
कर्ब्बुरवर्णाः छागीश्च याश्च किञ्चित् शुक्लवर्णा आ-
सीत्, ताः कपिलवर्णान् सर्व्वमेषांश्च पृथक् कृत्वा
३६ स्वपुत्राणां करेषु समर्प्य दूरं दिनत्रयमार्गं प्रेषयामास;
पश्चात् याकूब् लावनोऽवशिष्टपशुव्रजान् चारयितुम्
आरब्धवान्।
३७ अपरं याकूब् लिवुनी लूसः अर्म्मोणां वृक्षाणां सरसाः
शाखाः छित्वा तत्त्वचं विलोप्य काष्ठस्य शुक्लरेखाः
३८ बहिष्कृतवान्। अनन्तरं यदा पशवो जलं पातुम् आ-
यान्ति, तदानीं ते यथा गर्भं धारयन्ति, तदर्थं तोयपान-
काले पशूनां चक्षुषि तेषां सम्मुखे पानपात्रस्य मध्ये ताः
३९ शाखा उच्चीकृत्य स्थापयितुम् आरभत। अतएव तेषां

ताषां शाखानां सन्निधौ गर्भधारणात् विन्दुचिचिताः
कर्व्वुरवर्णा विचित्रा वत्सा अजायन्त। ततो याकूब् ४०
तान् वत्सान् पृथक् कृतवान् लाबनो विन्दुचिचितानां
कपिशवर्णानां वत्सानां सम्मुखे निजव्रजं स्थापित-
वान्; इत्थं स लाबनो व्रजेन सार्द्धं न मिश्रीय निज-
व्रजं पृथक् चक्रे। अपरं बलिनः पशवो यदा शाखा- ४१
समीपे गर्भांश् धारयन्ति, तदर्थं पानभाजनमध्ये पशूनां
समक्षं ताः शाखाः स्थापयामास; किन्तु दुर्ब्बलानां ४२
पशूनां समक्षं न स्थापयत्, तेन यावन्तो बलवन्तः पशव-
स्तावन्त एव याकूबो बभूवुः। अतो याकूब् अतिवर्द्धिष्णु ४३
र्बभूव तस्य पशुदासदासीमहाष्ट्रगर्द्दभाश्च बहवो
बभूवुः।

### ३१ एकत्रिंशत्तमोऽध्यायः।

१ लाबनः समीपात् याकूबः पलायनं १७ लाबनो पुत्त-
लिकाया राचेलापहरणं २२ याकूबः पश्चाद्गमनमारम्भ
२५ तस्य पश्चाद्गमनं ३० कृते दैवान्वेषणं ३६ लाबनं प्रति
याकूबस्तिरस्कारः ४४ याकूबा सह लाबनो नियमश्च।

अपरं याकूब् अस्माकं तातस्य सर्व्वस्वमपहृतं, अस्म- १
त्पितु र्धनात् तस्यैतान्यैश्वर्य्याणि जातानीति लाबनः
पुत्राणां वचनं याकूब् श्रुतवान्। लाबन् तं प्रति २
पूर्व्ववत् नहीति च तस्य वदनं विलोक्य याकूब् बुबुधे।

३ ततः परमेश्वरो याकूबं बभाषे, त्वम् आत्मनः पैतृकदेशं
ज्ञातीनां सन्निधिं परावृत्य याहि, अहं तव सहायोऽस्मि।
४ अतो याकूब् प्रान्तरे पशूनां सन्निधौ राहेलं लेयाञ्च
समाहूय बभाषे, युवयोः पितुर्वदनं मां प्रति पूर्व्ववत्
५ नहि, इत्यहमपश्यं, किन्तु मम पितुरीश्वरो मम सहाय
६ आसीत्। अहं यथाशक्ति युष्माकं पितु र्दास्यं कर्म्म कृत-
७ वान् तत् युवां जानीथो युवयोः पिता मां वञ्चितवान्
दशकृत्वो मम वेतनञ्चान्यथा कृतवांश्च, किन्त्वीश्वरो
मम हानिं तं नाकारयत्; यतो विचित्राः सर्व्वे पशव
८ एव वेतनस्वरूपा भविष्यन्तीति वाचं यदि स स्वयम्
अवदत्, तर्हि सर्व्वेभ्यः पशुभ्यएव विचित्राः पशवो जाताः
अपरं रेखाविशिष्टाः पशवः सर्व्वे तव भविष्यन्ति यद्येतत्
९ अवादीत्, तर्हि सर्व्वएव पशवो रेखायुक्ता बभूवुः। इत्थम्
ईश्वरो युवयोः पितुः पशुधनम् आदाय मह्यं दत्त-
१० वान्। यतः पशूनां गर्भाधानकाले ऽहं स्वप्ने स्वचक्षुषा
दृष्टवान्, अजस्य मध्ये योषित्पशूनाम् उपरि यावन्तः
पुंपशव आरोहन्ति, तावन्तएव बिन्दुचिह्निता विचित्रा
११ रेखायुक्ताश्च। तदानीम् ईश्वरीयदूतः स्वप्ने मां याकूब्
इत्याहूतवान्, तदा मया प्रतिभाषितम् अहमुपस्थितो-
१२ ऽस्मीति। ततः स उक्तवान्, पश्यैतत् योषित्पशूनाम्

उपरि यावन्तः पुंपशव आरोहन्ति, तावन्त एव बिन्दु-
चिचिता विचित्रा रेखावन्तश्च; अतस्त्वां प्रति लावन्
याकुब् व्यवहरति, तदहं दृष्टवान्। यत्र स्थाने त्वं १३
स्तम्भेऽभिषेचनं मम सन्निधौ प्रतिज्ञावचनञ्च कृतवान्; स
बैथेल ईश्वरोऽहम्; इदानीम् उत्थाय देशमिमं परित्यज्य
स्वीयज्ञातीनां सन्निधिं परावृत्य याहि। ततो राहेल् १४
लेयाभ्यां प्रतिजगदतुः, पैतृकनिवेशने किं कोप्यंशोऽस्ति
वाधिकार आवयोः? वयमिदानीं तस्य समीपे विदेशिलोकेन १५
किं गणिता नहि? यतः स आवां विक्रीय मूल्यं भुक्तवान्।
तस्मात् ईश्वरः आवयोः पितुः सकाशात् यावन्ति १६
धनानि गृहीतवान्, तावन्ति सर्व्वाण्यस्माकम् आवयोः
वंशस्य च ईश्वरस्त्वां यत् कथितवान् त्वं तदेव कुरु।

तदानीं याकूब उत्थाय स्त्रीरपत्यानि उष्ट्र- १७
तस्य महाङ्गान् आरोहयामास, पद्दनरामि ये १८
पशवो यांश्च सम्पत्तिरुपार्जिताः किनान् देशे स्वतात-
स्येस्हाकः समीपं गन्तुं तान् नीतवान्। तदानीं लावन् १९
मेषलोमानि छेत्तुं गतवान्, एतस्मिन्काले राहेल् निज-
तातस्य पुत्तलिका अपजहार। अनन्तरं याकूब् काश्चन २०
वार्त्ताम् अनुक्त्वा लावनम् अरामीयं वञ्चयित्वा तेनाज्ञातं
पलायाञ्चक्रे। इत्थं स निजसर्व्वस्वं गृहीत्वा पलायत; २१

फरात् नद्याः पारं गत्वा गिलियदं गिरिं सम्मुखीकृत्य
चलितवान्।
२२ अनन्तरं तृतीयदिवसे लावन् इत्थं याकूबः
पलायनवार्त्तां प्राप्य निजकुटुम्बान् नीत्वा तस्य
२३ पश्चात् सप्तदिनगम्यमार्गं धावन् गिलियद्गिरौ तं
२४ धृतवान्। किन्त्वीश्वरो रात्रौ स्वप्ने दर्शनं दत्वा अरा-
मीयलावनं बभाषे, सावधानो भव, भद्रं विना याकूबम्
अभद्रं मा वद।
२५ अनन्तरं लावन् याकूबं दधार, तदानीं याकूबो
दूष्यं पर्व्वतोपरि स्थापितमासीत्, ततो लावनपि कुटुम्बैः
२६ सह गिलियद्पर्व्वतोपरि दूष्यं स्थापयामास। ततः परं
लावन् याकूबे कथयामास, त्वं कुत ईदृक् कर्म्म कृतवान्?
मां वञ्चयित्वा धृतास्त्रलोका इव मम कन्ये ग्टहन्
कुत आगमः? त्वं मां वञ्चयन् कथं गुप्तः पलायितः?
२७ मां वार्त्तां नावादीः, तथामुक्तायां सत्याम् अहं त्वां
२८ आह्लादेन तिब्रिकवीणाकाव्यगानपूर्व्वकं व्यसर्क्ष्यम्। त्वं
पुत्रान् कन्याश्च चुम्बितुं मह्यं नादाः, कर्म्मेदम् अतीव मूढ-
२९ स्य कृतवान्। त्वां हिंसितुं मम करः समर्थो भवति, किन्तु
गतायां यामिन्यां तव पितुरीश्वरो मामवदत्, सावधानः
सन् विना भद्रम् अभद्रं किमपि याकूबं मा वादीः।

अपरं निजतातनिवेशनं यातुं तवातीव वाञ्छायां ३०
जातायां त्वं यातुमुद्यतोऽसि, तद् अस्तु, किन्तु मम
पुत्तलिकाः कुतश्चोरिताः? ततो याकूब् लावनं प्रति- ३१
जगाद, चेत् त्वं मत्तो निजकन्ये बलात् अपहरेः, इति
चिन्तयित्वा भीतवानहं। किन्तु मृगयित्वा यस्य निकटे ३२
पुत्तलिकाः प्राप्स्यसि, स न जीविष्यति। ममाच त्वदीयं
यदस्ति, तद् अस्माकं कुटुम्बानां समक्षम् अन्विष्य गृहाण;
यतो याकूब् राहेलस्तत् चौर्य्यं नाजानात्। तदानीं ३३
लावन् याकूबो लेयाया द्वयोर्दास्योश्च दूष्यगृहं गत्वा
गवेषयामास, किन्तु न लेभे। अनन्तरं स लेयाया
दूष्यतो राहेलो दूष्यगृहं प्रविवेश। किन्तु राहेल् ताः ३४
पुत्तलिका आदाय महाङ्कस्य सज्जाया अन्तः स्थाप-
यित्वा तदुपरि समुपविवेश; ततो लावन् तस्याः सर्व्वं
दूष्यगृहं मृगयित्वापि ता न प्राप्तवान्। तदानीं राहेल् ३५
ताताय कथयामास; भवतः समक्षम् उत्थातुं न शक्ताहं
हे प्रभो तेनासन्तुष्टो माभूत्, यतोऽहं स्त्रीधर्म्मिणी विद्ये;
तस्मात् तेनान्विष्यापि पुत्तलिका न प्राप्ताः।

तदानीं याकूब् क्रुद्धन् लावनं भर्त्सयित्वा जगाद, ३६
मम किमपराधः पापं वा विद्यते, यत् त्वं प्रज्वलन् मम
पश्चात् धावन् आगतवान्, त्वं मम सर्व्वाणि वस्तूनि ३७

मृगयित्वा निजगृहस्य किमपि वस्तु यदि प्राप्तवान्,
तर्हि तद् मम तव च कुटुम्बानां साक्षात् निधेहि, इमे
३८ पक्षयोरुभयो र्विचारं करिष्यन्ति। एतान् विंशति-
वत्सरान् यावत् तव गृहे स्थितवानहं; तत्र तव मेषी-
णां छागीनाञ्च गर्भस्रावोऽपि नाभवत्; तव व्रजस्य
३९ कमपि मेषमपि न भुक्तवान्। वरं हिंस्रजन्तुना यो
विदारितः सोऽपि तव समीपं मया नानीतः, तां हानिं
स्वयमहं स्वीकृतवान्; दिवा रात्रौ च यश्चोरित
४० स्तद्विनिमयो मत्तो गृहीतस्त्वया। अहं दिवसस्योष्ता-
पात् रात्रेः शीताच्च मृतकल्पोऽभवं; मम लोचनतो
४१ निद्रा दूरं गता। इत्थमहं विंशतिवत्सरान् यावत् तव
गृहे दास्यं कर्म्म कृतवान्, तत्र तव द्वयोः कन्ययोः कृते
चतुर्दश वत्सरान् तव पशूनां कृते षड् वत्सरान् दास्य-
वृत्तिं कृतवान्; तन्मध्ये त्वं मम वेतनान्यथा दशकृत्वः
४२ कृतवान्। यो मम पैतृक ईश्वर इस्हाकस्य भयस्थानं
स यदि मम सहायो नाभविष्यत्, तर्हीदानीं त्वमवश्यं
मां रिक्तहस्तं व्यसर्क्ष्यः। ईश्वरो मम दुःखं करपरिश्रमञ्च
दृष्टवान् तस्मात् गतायां यामिन्यां त्वाम् अतर्जयत्।
४३ तदानीं लावन् याकूबं प्रत्यवदत्, एताः कन्या ममैव
कन्याः, एते बालका ममैव बालका, एष पशुव्रजो ममैव

पशुव्रजः यद्यत् पश्यसि तत् सर्व्वं ममैवास्ते। अत एतयोः ४४
निजकन्ययोः एतासां प्रसूतापत्यानां च कृते किमिदानीं
कर्त्तुं शक्नोमि? किन्त्वागच्छ त्वया मया नियमं निर्णयाव
स तव मम च साक्षी स्थास्यति। तदानीं याकूब् पाषाणमे- ४५
कं गृहीत्वा स्तम्भम् -मस्थापयत्। याकूब् निजकुटुम्बान् ४६
अवदत्, यूयमपि पाषाणान् आनीय राशिं कुरुत,
ततस्ते पाषाणान् आनीय राशिमेकं चक्रुः, तत्र स्थाने
तस्मिन् राशौ च ते स्वयं बुभुजिरे। अनन्तरं लावन् ४७
तस्य नाम यिगर्साहदुथां (साक्षिराशिं) चकार किन्तु
याकूब् तस्य नाम गलियेदं (साक्षिराशिं) चकार। तदानीं ४८
लावन् उवाच, राशिरयम् अद्य तव मम च साक्षी स्थित
वान्, तस्मात् तस्य नाम गलियेदं मिस्पां च (रक्षिणं)
कृतवान्। यतः सोऽकथयत्, अस्मासु परस्परम् अदृष्टेषु ४९
सत्सु परमेश्वरो मम तव च रक्षकः स्थास्यति। यदि त्वं ५०
मम कन्याभ्यां दुःखं ददासि वा मम कन्याभ्यां इतरां
कन्यां विवहसि, तर्हि तदानीं कश्चिदपि समीपे न स्थिते
पि मम तव चेश्वरः साक्षी भविष्यति। लावन् याकूबम् ५१
अपरमप्यवदत्, एतं राशिं वीक्षस्व मम तवच मध्य-
वर्त्ती मया स्थापितं एतं स्तम्भं प्रपश्य च। अहम् अपकर्त्तुं ५२
राशेरस्य पारमुत्तीर्य्य तव समीपं न गमिष्यामि, तथा

त्वमपि राशेरस्य स्तम्भस्य च पारमुत्तीर्य्य मम सन्निधिं
न यास्यसि, तस्य साक्षी राशिरयं, तस्य साक्षी स्तम्भोऽयञ्च।
५३ एतस्मिन् इब्राहीम ईश्वरो नाहोर ईश्वरः, तयोः पूर्व्व-
पुरुषाणाञ्च ईश्वरश्च मध्य आवयोर्विचारं करिष्यति;
तदानीं याकूब् स्वपितुरिस्हाको भयस्थानस्य तं शपथं
५४ चकार। ततः स तस्मिन् धराधरे बलिं दत्त्वा भोक्तुं
निजकुटुम्बान् न्यमन्त्रयत्, तत्र ते भुक्त्वा धराधरे
५५ कृत्स्नां रात्रिं यापयामासुः। अनन्तरं लावन् प्रत्यूषएव
प्रोत्थाय निजदुहितॄः बालकांश्च चुम्बित्वाशिषं प्रोच्य
यात्रां कुर्व्वन् निजदेशं प्रतस्थे।

३२ द्वात्रिंशत्तमोऽध्यायः।

१ याकुबो दूर्शनं एसावं प्रति वार्त्ताप्रेरणं ६ दूतस्य प्रत्यागमनं याकूबः प्रार्थना १३ उपढौकनसाधनं १६ उपढौकनप्रेषणं २४ याकूबो मल्लयुद्धं ३१ तस्य नदीपारगमनञ्च।

१ तदनन्तरं याकूबा यात्रायां कृतायां सत्यां ईश्व-
२ रीया दूतास्तस्य प्रत्यक्षीबभूवुः। तदानीं याकूब् तान्
विलोक्य कथितवान्; ईश्वरीयसैन्यान्येतानि, तस्मात्
३ तस्य स्थानस्य नाम महनयिमं (सैन्यद्वयं) चकार। ततः
परं याकूब् अधिष्ठितसेयीरदेशीयम् इदोम्प्रदेशं प्रति
भ्रातुरेषावः समीपं दूतान् प्रेरयित्वा तान् इत्याज्ञापया-
४ मास, यूयं मम प्रभुमेषावम् इमां वार्त्तां वदत, तव दासो

याकूब् त्वां ज्ञापितवान्, अहम् अद्य यावत् लाबनः
समीपे प्रवासं कृत्वागतोऽस्मि। मम गोगर्द्दभपशूनां प्रजा ५
दासा दास्यश्च विद्यन्ते, ततोऽहं स्वप्रभोरनुग्रहदृष्टिं प्राप्तुं
त्वां प्रति वार्त्तां प्रहितवान्।

अनन्तरं दूताः प्रत्यागत्य याकूबं जगदुर्वयं तव ६
भ्रातुरेषावः समीपं अगमाम; स चतुःशतानि लो-
कान् गृहीत्वा त्वां साक्षात् कर्त्तुम् एति। ततो याकूब् ७
अतीवभीतो दुःखितश्च बभूव सङ्गिनो लोकान्
गोमेषादिसर्व्वप्रजान् महाङ्गांश्च विभज्य द्वौ निवहौ
कृत्वा बभाषे, एषौरागत्य यदि निवहमेकं प्रहरिष्यति, ८
तथापोतरो निवहो जीविष्यन् पलायिष्यते। तदानीं ९
याकूब् उक्तवान्, हे मम पितुर् इब्राहीम ईश्वर मम
पितुरिस्हाक ईश्वर, त्वमेव परमेश्वरः त्वं स्वयं मह्यं
कथितवान्, त्वं स्वदेशे ज्ञातीनां समीपं प्रत्यागच्छ,
ततोऽहं त्वया सार्द्धं साधु व्यवहरिष्यामि। मम एतं १०
दासेयं प्रति दयां विश्वासत्वञ्च यादृक् प्रादुष्कृतवान्
तस्य लवस्यापि नाहं योग्योऽस्मि; अहं यष्टिमात्रं
गृहीत्वा यर्द्दन्नदीमिमां तीर्णवान्, किन्त्विदानीमहं
निवहद्वयस्य पतिरभवम्। इदानीम् भ्रातुरेषावः करात् ११
मामव, यतः स आगत्य चेत् मां मम बालकान् तेषां

१२ मातरौ च हनिष्यतीति बिभेमि। त्वया कथितं,मया तव
क्षेमं कृत्वा समुद्रसिकतेव तव वंशोऽसङ्ख्यम् एधयिष्यते।
१३ अपरं याकूब् तस्यां यामिन्यां तत्र स्थाने तिष्ठन्
उपस्थितेभ्यः पशुभ्यः कतिचित् आदाय भ्रातुरेषावः
१४ कृते उपढौकनम् आसादितवान्; अर्थात् द्वे शते छाग्यो
विंशतिश्छागा द्वे शते मेष्यो विंशति र्मेषाः त्रिंशत्
१५ सवत्सा दुग्धवत्यो महाङ्ग्यः चत्वारिंशत् स्त्रीगव्यः दश
वृषा विंशति गर्द्दभ्यो दश गर्द्दभाश्च तेन समासादिताः।
१६ अनन्तरं सर्व्वान् व्रजान् पृथक् कृत्वा निजदा-
सानां करेषु समर्प्य तान् आज्ञापयामास, यूयं ममाग्रे
गच्छत; मध्ये स्थानं स्थापयित्वा च व्रजमेकैकं पृथक्
१७ कुरुत। ततः सोऽग्रगामिनं दासमित्याज्ञापयामास;
भ्रातरेषावि त्वया साक्षात् कृते, स यदा प्रक्ष्यति, त्वं कस्य
दासः? कुत्र वा यासि? तवाग्रस्थिताः ते सर्व्वे च कस्य?
१८ तदानीं प्रतिवक्ष्यसि, एते सर्व्वे तव दासस्य याकूबः स
निजप्रभव एषावे सर्व्वान् एतान् उपढौकनीकृत्य प्रादात्,
१९ पश्य, स पश्चादस्माकम् समेति। इत्थं द्वितीयतृतीय-
प्रभृतीनां व्रजाणां पश्चाद्गामिनः सर्व्वदासान् आदिशन्
जगाद, एषावि साक्षात् भूते यूयमित्थं कथां कथयि-
२० ष्यथ। अपरं कथयिष्यथ पश्य, तव दासोऽयो याकूब्

अस्माकं पश्चात् समायाति। यतः मनसि कथयामास,
पूर्व्वम् उपढौकनं प्रहित्य तं शान्तयिष्यामि, पश्चात् तं
साक्षात् करिष्यामि, तेन स मां प्रत्यनुग्रहं करिष्यति।
तस्मात् तदग्र उपढौकनद्रव्यं गतं, किन्तु स्वयं तस्यां २१
यामिन्यां निजनिवहस्य मध्ये तस्थिवान्। ततो २२
यामिन्यां स उत्थाय स्वस्य द्वे जाये द्वे दास्यौ स्वीयैका-
दशपुत्रांश्च यब्बोक्घाटे पारं तारयितुं निनाय।
तान् तटिनीपारं तारयित्वा निजं सकलद्रव्यं पारं २३
प्रहितवान्।

तदानीं याकूबि तत्रैकाकिनि तिष्ठति सति पुरुष २४
एक आप्रभातं तेन सार्द्धं मल्लयुद्धेन युयोध, किन्तु तं
जेतुं न शशाक। इति वीक्ष्य स याकूब ऊरुसन्धिम् २५
आजघान; तेन सार्द्धम् इत्थं मल्लयोधनात् याकूब
ऊरुसन्धिः स्थानान्तरो बभूव। ततः परं स पुरुष २६
उदितवान्, मां त्यज, यतः प्रभातमभूत्; तदानीं याकूब्
उक्तवान्, मह्यम् अदत्ताशिषं त्वां न त्यक्ष्याम्यहम्।
पुनश्च तेन पुरुषेणावादि, तव किं नाम ? स प्रत्युवाच, २७
याकूब्। स उवाच, त्वं याकूबनाम्ना पुन र्न विख्यास्यसि, २८
किन्तु इस्रायेला (ईश्वरजेता) नाम्ना विख्यास्यसि, यतस्त्वं
राजवत् ईश्वरेण मानुषेण च युद्ध्वा जितवान्। तदानीं २९

याकूब् जगाद, प्रार्थयेऽहं भवतः किं नाम ? वदतु स
कथितवान्, त्वं किं कृते मम नाम पृच्छसि ? ततः परं तत्र
३० याकूबम् आशिषं प्रोक्तवान्। तदा याकूब् तस्य स्थानस्य
नाम पिनूयेलं (ईश्वरवदनं) कृतवान्; यतः स गदि-
तवान्, मयेश्वरीयवदने प्रत्यक्षं दृष्टेऽपि मम प्राणा
अजीवन्।
३१ ततः परं तस्मिन् पिनूयेलः पारं गते भास्कर
उदियाय; किन्तु तदीयोरुसन्धे मुक्तत्वात् स जङ्घया
३२ खञ्जो बभूव। अत इस्रायेलन्वयैरद्यापि गोर्व्वीः सङ्को-
चितमुख्यधमनिं भुज्यते; यतो दूतेन याकूब ऊरो
र्वंक्षणे स्पृष्टे तस्य धमनिः सङ्कोचिता बभूव।

## ३३ त्रयस्त्रिंशत्तमोऽध्यायः ।

१ याकूब एषौसाक्षात्करणं १७ याकूबः सुक्कोत्गमनं १८ याकूबः शिखिमनगर उपस्थानं भूमिक्रयणं वेदिनिर्म्माणञ्च ।

१ अनन्तरं याकूब् लोचने उत्तोल्य वीक्षमाणः चतुः
शतैः नरैः सार्द्धम् आगच्छन्तम् एषावं ददर्श ; ततः
निजापत्यैः सार्द्धं लेयां राहेलां द्वे दास्यौ च पृथक्
२ कृतवान्। फलतोऽग्रे स्वीयापत्यैः सार्द्धं दासी तत्पश्चात्
निजापत्यैः सार्द्धं लेयां सर्व्वशेषे यूषफा सार्द्धं राहेलं
३ निरुप्य स्वयं सर्व्वेषाम् अग्रे गत्वा भूमिष्ठः सन् सप्तकृत्वः

प्रणमन् स्वभ्रातुः समीप उपस्थितवान्। तदानीम् ४
एषौस्तेन साकं मेलितुं द्रुतमागत्य याकूबः कण्ठं धृत्वा-
लिङ्गनचुम्बने चकार, तत उभावेव रोदतुः। स ५
लोचन उन्मील्य योषितो बालकांश्च विलोक्य पप्रच्छ?
इमे तव के? ततः स प्रत्युवाच, ईश्वर स्व दासंप्रति दयां
कृत्वा सर्व्वाणीमान्यपत्यानि दत्तवान्। तदानीं दास्यौ ६
तासामपत्यानि च समीपमागत्य प्राणमन्। अनन्तरं ७
लेया तदपत्यानि चागत्य प्राणमन्; सर्व्वशेषे यूषफ्
राहेलौ समीपमागत्य प्राणमताम्। एषौ पृष्टवान् ८
अहमद्य यान् पशुव्रजान् अदर्शं, ते किन्निमित्ताः?
याकूब् उदितवान्, प्रभोरनुग्रहप्राप्तिनिमित्ताः।
तदानीम् एषौः कथितवान्, हे भ्रात मम प्रभूताः ९
सन्ति तव यदास्ते, तत् स्वार्थं निधेहि। याकूबोदितं १०
नेत्थं भवतु, निवेदयामि, यद्यहं भवतो दृष्ट्यानुग्रहं
प्राप्तं, तर्हि मम करात् उपढौकनीयं द्रव्यं गृहाण;
यतोऽहम् ईश्वरीयवदनदर्शनवत् त्वदीयवदनम् अदर्शं,
तेन त्वमपि मयि तुष्टवान्। अत इदानीं भवतः कृते ११
यदुपढौकनीयद्रव्यं आनीयते, तद् गृह्णातु, मदीयेयं
प्रार्थना; यत ईश्वरानुग्रहात् मम प्राज्यमास्ते; इत्थम्
अत्याग्रहं प्रार्थित एषौस्तत् जग्राह। अनन्तरम् एषौः १२

कथयामास, आगच्छावां यावः, युष्माकमग्रेऽहं गच्छामि।
१३ ततो याकूब् बभाषे, एते बालकाः कोमलाः दुग्धवत्यो
मेष्योगवादिमजाश्च मम सङ्गिनः सन्ति, तत् प्रभुः
पश्यति; दिनैकमात्रमधिकं चालिताः सर्व्वे प्रजा मरि-
१४ ष्यन्ति। अतो निवेदयामि, हे मम प्रभो, भवान् निज-
दासेयस्याग्रे यातु; सेयीरप्रदेशे मम प्रभोः समीपोप-
स्थितिं यावत् पशूनां बालकानाञ्च गमनशक्तेरनुसारतः
१५ शनैरहं तान् नयामि। एषौः कथयामास, तर्हि मम
सङ्गिनः कियन्तो मनुजा स्तव समीपे निधाय यान्ति;
याकूब् कथितवान् तेन प्रयोजनं किं? साम्प्रतं
केवलं प्रभोरनुग्रहो भवतु।
१६ तत एषौस्तस्मिन्नेवाहनि सेयीरः पथा प्रत्याजगाम।
१७ किन्तु याकूब् सुक्कोतं गत्वा तत्र निजार्थं गेहं पश्वर्थं
कूटीश्च निर्म्ममे; तस्मात् तत् स्थानं सुक्कोत् (कूटीति)
व्याख्यत्।
१८ इत्थं याकूब् पद्दनरामः प्रत्यागम्य निर्व्विघ्नं
किनान् देशान्तर्गतशिखिम एकस्मिन् नगरे उपस्थाय
१९ नगरस्य बहि दूष्यं स्थापयामास। अनन्तरं शिखिमः
पिता हमोर् वंशीयजनेभ्यः शतं रूप्यमुद्रा दत्त्वा तद्
भूमिखण्डं क्रीतवान् तत्र च दूष्यं स्थापयित्वा वेदिमेकां

निर्म्मितवान्, तन्नामधेयम् एल् इलोहीइस्रायेल् २०
(इस्रायेल् सर्व्वशक्तिमान् ईश्वरः) इति कृतवांश्च।

३४ चतुस्त्रिंशत्तमोऽध्यायः।

१ शिखिमि दीणाया धर्षणं त्वक्छेदनेन विवाहसम्बन्धनिर्णयः २० हमोरः शिखिमस्य वाक्येन नराणां त्वक्छेदाङ्गीकारः २५ त्वक्छेदेन पीडितजनान् प्रति याकूबीयपुत्रद्वयोराक्रमणं हननं लोठनञ्च।

अनन्तरं याकूबो लेयाया जायाया जाता दीणा- १
नामिका कन्या तद्देशीयकन्याः साक्षात् कर्त्तुं बहिर्गता।
तदा हिव्वीय हमोर नामाधिपतेः सुतः शिखिम् तां २
विलोक्य बलादपहृत्य संगम्य भ्रंशयामास। याकूब ३
स्तस्यां कन्यायां दीणायां तस्य मनसो मग्नत्वात् स मनो-
हरं वच उक्त्वा तस्यां प्रीतवान्। ततः परं शिखिम् ४
निजपितरं हमोरं जगाद, कन्यामेतां त्वं मां विवाहय।
अनन्तरं शिखिम् मम दुहितरं भ्रंशितवान्, इति कथां ५
याकूब् शुश्राव। तदानीं तस्य पुत्राः प्रान्तरे पशुव्रजान्
अचारयन्; अतो याकूब् तेषामागमनपर्य्यन्तं स्तब्धोऽ-
तिष्ठत्। तदानीं शिखिमः पिता हमोर याकूबा सार्द्धं ६
संलपितुं जगाम। अपरं याकूबः सुतास्तां वार्त्तां श्रुत्वा ७
प्रान्तरात् तूर्णमाजग्मुः; याकूबः कन्यया बलात्कार-
सङ्गमात् इस्रायेलो विरुद्धं शिखिम इदम् अधमं

अकर्त्तव्यञ्च यत् कर्म्म तस्मात् मनस्तापिताः शोकान्वि-
८ ताश्च बभूवुः। तदानीं हमोर् तैः सार्द्धं संलप्य कथया-
मास, युष्माकम् अस्यां कन्यायां मम सुतस्य शिखिमो
मन आसजत्; अतो निवेदयामि, मम सुतेन सार्द्धं तां
९ विवाहयत; सार्द्धमस्माभि वैवाहिकसम्बन्धञ्च कुरुत,
युष्माकं कन्या अस्मभ्यं दत्त, अस्माकं कन्या गृह्णीत च।
१० यदि यूयमस्माभिः सार्द्धं वसथ, तर्हि युष्माकं सम्मुखे
देशोऽयमास्ते तत्र वसत, वाणिज्यं कुरुत, अधिकुरुत च।
११ शिखिम् दीणायाः पितरं भ्रातॄंश्च जगाद, यूयं मां
प्रति कृपादृष्टिं कुरुत; ततो यद् वदिष्यथ, तदेव
१२ दास्यामि। यौतुकं दानञ्च यावद् अधिकं प्रार्थयिष्यथ
युष्माकं वाक्यानुसारात् तावदेव दास्यामि, किन्तु मह्यं
१३ सार्द्धम् एनां कन्यां विवाहयत। तदानीं शिखिमा तेषां
दीणाया भगिन्या भ्रंशनात् याकूबः सुताः शिखिमं
१४ तेषां तातं हमोरञ्च कौशलेन जगदुः; अत्वक्छेदिभ्यो
वयं निजभगिनीं दातुं न शक्नुमः; दाने कृतेऽस्माकम् अप-
१५ यशो भविष्यति। किन्तु वयमिव यूयं सर्व्वे पुरुषा यदि
त्वक्छेदिनो भवेत तर्हि पणेनानेन वयमङ्गीकरिष्यामः।
१६ युष्मभ्यं निजकन्याः प्रदास्यामः; युष्माकं कन्याश्च
वयं ग्रहीष्यामः, युष्माभिः सार्द्धं निवसन्त एकजातयो

भविष्यामः। किन्तु यूयं त्वक्छेदमेऽस्माकं वचो न शृणुथ १७
तर्हि वयं तां कन्यां गृहीत्वा यास्यामः। तदानीं तेषां १८
कथयानया हमोर् तत्सुताः शिखिमपि तुतुषतुः।
अनन्तरं स युवा क्षिप्रं तत् कर्म्म चकार; यतः स याकूबः १९
कन्यायाम् अतीवाप्रीयत, स च शिखिम् निजपितृ-
परिवारेभ्यः सर्व्वेभ्यः सम्मान्य आसीत्।

ततः परं हमोर तस्य सुतः शिखिम् च निजनगरस्य २०
द्वारम् आगत्य नगरवासिभिः सार्द्धं संलप्य कथयामा-
सतुः, इमे जना अस्माभिः समं निर्व्विरोधिनः तस्मात् २१
इमं देशमधिवस्तुम् एतेभ्यो ददाव; यतः पश्यत देशोऽयं
तेषां कृते प्रभूतोऽस्ति; तेषां च कन्या वयं ग्रहीष्यामः
अस्माकं कन्याश्च तेभ्यो दास्यामः। किन्तु तेषामयं पण २२
आस्ते, अस्माकं मध्ये सर्व्वे पुरुषा यदि तद्वत् छिन्नत्वचो
भवन्ति, तर्हि तेऽस्माभिः सार्द्धम् उषित्वा एकजातयो
भवितुं संमन्यन्ते। अपरं तेषां धनानि सम्पत्तयः पशवश्च २३
किमस्माकं न भविष्यन्ति? अस्माभिस्तेषां वचनेऽङ्गीकृते
तेऽस्माभिः सार्कं निवत्स्यन्ति। तदानीं ये ये नरा नगरस्य २४
वहिरगच्छन् ते सर्व्वे हमोरस्तत्सुतस्य शिखिमस्य
कथामेताम् अमन्यन्त; तस्य नगरस्य वहिर्गताः सर्व्व एव
मनुजा छिन्नत्वचो बभूवुः।

२५ अपरं तृतीयदिवसे तेषु पीडितेषु सत्सु दीणाया
भ्रातरौ शिमियोन् लेविश्च याकूब एनौ द्वौ सुतौ खड्गं
गृहीत्वा हठात् नगरमाक्रम्य सकलान् पुरुषान् नि-
२६ जघ्नतुः । इमोरं तस्य सुत शिखिमञ्च खड्गाघातेन
२७ हत्वा शिखिमो गृहात् दीणां निन्यतुः । अपरं तेषां
भगिन्या भ्रंशनात् याकूबः सुता हतनराणां समीपम्
२८ आगत्य नगरं लोठयामासुः । अपरं तेषां मेषान्
गा गर्द्दभान् सर्व्वान् नगरस्थानि क्षेत्रस्थानि च सर्व्व-
२९ द्रव्याणि च जगृहुः। अपरं तेषां शिशून् योषितश्च वन्दी-
कृत्य तेषां सर्व्वाणि धनानि गेहस्थसर्व्वस्वानि लोठया-
३० मासुः । तदानीं याकूब् शिमियोनं लेविञ्च जगाद, युवा-
मेतद्देशीयानां अर्थात् किनानीयपिरिषीयमनुजानां
सन्निधौ मां दुर्गन्धस्वरूपं कृत्वा व्याकुलीकृतवन्तौ;
मदीयलोका अल्पा एतस्मात् ते मद्विरुद्धं मिलित्वा
३१ मां हनिष्यन्ति, ततोऽहं सपरिवारो विनंक्ष्यामि। तावु-
चतु, यथा वेश्यया सार्द्धं तथैव स किमस्माकं भगिन्या
सार्द्धं व्यवहरिष्यति ?

---

## ३५ पञ्चत्रिंशोऽध्यायः।

१ ईश्वरस्य याकूबो बैथेलं प्रति प्रेरणं ६ तत्र वेदिनिर्म्माणं दबोराया मरणं ९ बैथेलि याकूबे ईश्वरस्याशीर्दानं प्रसव-वेदनाकष्टात् राहेलो मरणं २१ याकूबो वंशराजिः २७ इस्हाको मरणं श्मशाने निधानञ्च।

अनन्तरम् ईश्वरो याकूबं व्याजहार, त्वमुत्थाय १
बैथेलं गत्वा तत्र वासं कुरु; भ्रातुरेषावः समीपात्
तव पलायनकाले य ईश्वरस्तुभ्यम् आत्मिपं दत्तवान्
तमुद्दिश्य तत्र यज्ञवेदिं निर्म्माहि। ततो याकूब् निज- २
परिजनान् सङ्गिलोकांश्च अवदत् युष्माकं सन्निधौ यद्दे-
वमूर्त्तय आसते, यूयं ता अपसार्य्य वस्त्राण्यन्यानि परि-
धाय शुद्ध्यत। अपरं वयमुत्थाय बैथेलं यामः; य ३
ईश्वरो मदीयदुःखसमये मम प्रार्थनां श्रुत्वा मम गमन-
मार्गे सहायोऽभवत्, तमुद्दिश्य तत्र यज्ञवेदिमेकां
निर्म्मामि। ततस्ते स्वसमीपस्थितदेवमूर्त्तिकर्णकुण्डलानि ४
गृहीत्वा याकूबे ददुः, स तान्यादाय शिखिम् देश-
स्थितालोनवृक्षमूले पोथयित्वा ततो यात्रां चकार।
किन्तु चतुर्द्दिक्स्थनगरेषु भयोपस्थिते तत्रत्यलोकाः ५
केपि याकूबः पुत्राणां पश्चात् ताडयितुं न जग्मुः।
अनन्तरं याकूब् तस्य सङ्गिनश्च किनान्देशस्य ६
लूसि नगरे अर्थात् बैथेले आगत्य स यज्ञवेदिं निर्म्माय ७
तस्य स्थानस्य नाम एल् बैथेलं (बैथेल ईश्वरं) कृतवान्;

यतो याकूबो भ्रातृभयात् पलायनकाले तस्मिन् स्थाने
८ ईश्वरस्तस्मै दर्शनं दत्तवान्। अपरं तत्र रिव्काया
दास्या मरणे सति बैथेलः समीपस्थालोन् पादपस्य मूले
तस्याः श्मशानवेश्म बभूव; तस्य स्थानस्य नामधेयम्
आलोन् बाखुत् (शोकवृक्षः) इति बभूव।
९ अनन्तरं याकूबि पद्दनरामः प्रत्यागते सति तं पुनः
१० स्वं दर्शयामास पुनराशिषञ्च व्याजहार। अपरम् ईश्वरः
तं जगाद, इदानीं तव याकूब् नामास्ते किन्तु केवलं
याकूब नाम न स्थास्यति, इस्रायेल् नामापि भविष्यति;
११ ततःपरं तस्य नामधेयम् इस्रायेलं कृतवान्। ईश्वरेण
तस्मै पुनरकथ्यत, सर्व्वशक्तिमान् अहमेवेश्वरस्त्वं फलवान्
भूत्वा प्रवर्द्धस्व; त्वत्त एका जातिरिति नहि बहुजाति-
१२ रुत्पत्स्यते तवौरसा राजानो जनिष्यन्ते। अपरम् अहं
इब्राहीमे इस्हाके च यं देशं दातुं प्रतिज्ञातवान् तं
१३ देशं तुभ्यं तव भाविवंशाय च दास्यामि। इत्थं संलप्य
१४ तस्मात् ईश्वर ऊर्द्ध्वं जगाम। ततो याकूब् ईश्वरस्य
तत्संलपनस्थाने स्तम्भम् एकम् अर्थात् प्रस्तरस्य स्तम्भमेकं
१५ संस्थाप्य तदुपरि पेयनैवेद्यं तैलञ्च सिषेच। अपरं
याकूब् ईश्वरेण सार्द्धं संलपनस्थानस्य नाम पुनरपि
बैथेल् (ईश्वरगेह) इति कृतवान्।

अनन्तरं ते बैथेलः प्रतस्थिरे; किन्तु इफ्राथा १६
उपस्थितेरल्पे पथि स्थिते राहेलः प्रसववेदना बभूव,
तस्याः प्रसूतौ बहु कष्टञ्च जातम्। ततः प्रसववेदनाया १७
अतिशयत्वे सति धात्री तां बभाषे, मा भैषी स्त्वमिदानी-
मपि सुतं प्रसोष्यसे। ततो मरणकाले प्राणवियोग समये १८
स तस्य नाम बिनोनी (कष्टजातपुत्रः) इति चकार;
किन्तु तस्य नाम बिन्यामीन् (दक्षिणहस्तपुत्रः) इति
कृतवान्। इत्थं राहेलो मरणे सति इफ्राथा अर्थात् १९
बैत्लेहेमो गमनमार्गस्य समीपे तस्याः श्मशानस्थानं
बभूव। ततो याकूब् तस्य श्मशानस्योपरि स्तम्भमेकं २०
स्थापयामास, तस्य नामाद्यापि राहेलः श्मशानस्तम्भ
इति वदन्ति।

अनन्तरम् इस्रायेल् तत्स्थानात् प्रस्थाय पालस्य स्य २१
पारं गत्वा तस्य समीपे दूष्यं स्थापयामास। तस्मिन् देशे २२
निवासकाले रूबेन् निजतातस्य बिल्हानामिकाम्
उपपत्नीम् उपगतवान् एतत् इस्रायेल् श्रुतवान्। याकूबो २३
द्वादशसुतास्तेषां मध्ये लेयागर्भजातो रूबेन् ज्येष्ठः
अपरं शिमियोन् लेवि यिहूदा इषाखर् सिबूलून्।
राहेलः सुतौ यूषफ् बिन्यामीनौ। अपरं राहेलो २४
बिल्हायादास्याः सुतौ दान् नप्तालिश्च। लेयायाः २५

२६ सिल्पाया दास्याः सुतौ गाद्आशेरौ, याकूब एते सुताः
पद्दनरामि जज्ञिरे।
२७ अपरम् इब्राहीम् इस्हाक् च यत्र मम्रीस्थाने
अर्थात् अर्ब्बनगरे न्यवसतां, अद्य यावत् यच्च हिब्रोणं
वदन्ति, तत्र याकूब् निजतातस्येस्हाकः समीप उप-
२८ स्थितवान्। तदानीम् इस्हाको वयः साशीतिशतं
२९ वत्सरा आसन्। अनन्तरम् इस्हाक् वृद्धः पूर्णायुश्च
भवन् प्राणान् त्यक्त्वा निजलोकैः सार्द्धं संगृहीतोऽभवत्;
तस्य तु तावेषौयाकूबौ तं श्मशाने स्थापयामासतुः।

### ३६ षट्त्रिंशत्तमोऽध्यायः ।

१ किनानदेशीयस्त्रैषावो वंशराजिः ६ तस्य सेयीरपर्ब्बतगमनं ९ सेयीर् पर्ब्बते तस्य वंशराजिः १५ तस्य पुत्त्रजातानां राज्ञां नामानि २० सेयीरो वंशराजिः ३१ इदोमो राज्ञां नामानि ४० एषौजातानां राज्ञां नामानि च।

१ तदेषावो नामधेयम् इदोमप्यासीत्, तदीयवंशराजिः।
२ एषौः किनानीयानां द्वे कन्ये अर्थात् हित्तीयैलोनः
कन्याम् आदाम् हिव्वीय सिबियोनः अनाया गर्भजातां
३ कन्याम् अहलीवामां; तदन्याम् इस्मायेलो वासिमन्ना-
४ मिकां कन्यां निवायोतो भगिनीं व्यवहत्। अनन्तरम्
एषाव औरसम् आदागर्भे इलीफस् वासिमतो गर्भे
५ रूयेल् यज्ञे। अपरम् अहलीवामाया गर्भे यियूश्

यालम् कोरहश्च जज्ञिरे, एषाव एते सर्व्वसन्तानाः
किनान्देशे जज्ञिरे।

ततः परम् एषौः स्वीयभार्य्याः सुतान् कन्या गेह- ६
स्थितान्यान् सकललोकांश्च स्वकीयपशून् किनान्देशे
उपार्ज्जितां सर्व्वसम्पत्तिञ्च गृहीत्वा भ्रातु र्याकुबः
सन्निधे र्देशमन्यं प्रतस्थितवान्। यस्मात् तयोः प्रभूतै- ७
श्वर्य्यसम्भवात् वास एकत्र न संबभूव, तत्र प्रवासस्थाने
च पशुधननिदानात् न निर्व्वाहः। इत्थं एषौः ८
सेयीरधराधरे न्यूवास तस्यैषावो नामधेयम् इदोम-
प्यासीत्।

अपरं सेयीर् धराधरस्थायीदोमीयानां पूर्व्वपुरुषस्यै ९
षावो वंशराजिः, अर्थात् एषावः सन्तानानां नामानि।
एषाव आदानामिकाया जायाया गर्भजातः सुतः १०
इलीफस् वासिमत्नामिकायाः स्त्रिया गर्भजातः सुतो
रूयेल्। अपरम् इलीफसः सुतः तैमन् ओमार् सिफो ११
गयितम् किनस्। अपरम् एषावः सुतस्येलीफसः १२
तिम्ना नामिकाया उपपत्न्या गर्भजात अमालेक् एते
सर्व्वे एषाव आदायाः पत्न्याः पौत्राः। रूयेलः सुतो १३
नहत् सेरह शम्म मिषा इमे एषावो जायाया वासि-
मतः पौत्राः। अपरम् एषावोऽहलीवामा या जाया १४

सिबियोनः पौत्र अनार् कन्या तस्या अपत्यानि यियुस्
यालम् कोरहः।
१५　एषावः सुतानां राज्ञां वंशराजिः। एषावो ज्येष्ठ
पुत्रो य इलीफस् तस्य पुत्रो राजा तैमन् भूप ओमार्
१६ भूपः सिफो: भूपः किनस्; भूपः कोरहः राजा गयितम्
भूम्रत् अमालेक् एत इलीफसः पुत्रा आदायाः पौत्रा
१७ इदोमदेशस्य राजान आसन्। एषावः पुत्रस्य रूयेलः
सन्ताना राजा नहत् राजा सेरहः राजा सम्मः राजा
मिसा एते रूयेल् औरससुता एषावो वासिमत् जा-
१८ यायाः पौत्रा इदोमदेशस्य राजान आसन्। अपरम्
एषावो अह्लीवामाया भार्य्यायाः पुत्रा राजा यियूस्
राजा यालम् राजा कोरहः एते अना कन्या या एषावो
१९ जाया अह्लीवामा तस्या गर्ब्भजाता राजानः। एते
एषाव अर्थात् इदोम औरस पुत्रा राजानः।
२०　पूर्व्वकाले तद्देशनिवासि होरीय सेयीरः सन्तानाः
लोटन् शोवल् सिबियोन् अना दिशोन् एत्सर् दीशन्।
२१ इमे इदोम् देशीय सेयीरः पुत्रा होरीयलोकानां
२२ राजान आसन्। लोटनः पुत्रौ होरिहेममौ लोट-
२३ नस्य तिम्रा नामिका भगिन्यासीत्। अपरं शोवलः
पुत्रो अल्वन् मानहत् एबल् शिफो ओनम्।

सिवियोनः पुत्रौ अया अनाश्च। एष अना निजपितुः २४
सिवियोनः गर्द्दभचारणसमये वने उष्णतो यस्य प्रस्र-
वणं प्राप्तवान्। तस्यानाः पुत्रो दिशोन् कन्या अहली- २५
वामा। दिशोनस्य पुत्रा हिमदन् इश्बन् यित्रन् २६
किरान्। अपरम् एत्सर् पुत्रा विल्हन् सावन् याकन्। २७
दिशन् पुत्रा ऊस् अरान्। अपरं होरीयानां पुत्रा २८
राजा लोटन् राजा शोवल् राजा सिवियोन् राजा २९
अना राजा दिशोन् राजा एत्सर् राजा दिशन्। एते ३०
होरीयानां सन्तानाः सेयीर देशस्थराजानां मध्ये
राजान आसन्।

अपरम् इस्रायेलः सन्तानानां राजत्वात् पूर्व्वं ३१
इमे इदोमो देशस्य भूपतय आसन्। वियोरो बेला- ३२
नामा सुत इदोमि देशं शशास दिन्हाबानगरञ्च
तस्य राजधान्यासीत्। अपरं बेले मृते सति तस्य ३३
पदे वस्रानिवासिनः सेरहः सुतो योबब् तच्छशास।
ततो योबबि मृते सति तैमन्देशीयो हूशम् तस्य ३४
पदे देशं शशास। ततो हूशमि मृते सति बिददः सुतो ३५
यो हदद् मोयाबः प्रान्तरे मिदियनं जितवान् स
तस्य पदे देशं शशास; तस्य राजधान्या च नामधेयम्
अवीत आसीत्। ततो हददि मृते सति मस्रेका- ३६

३७ निवासी सम्लस्तस्य पदे देशं शशास। ततः सम्ले मृते
सति फरात्तटिन्याः समीपवर्त्ती रिहोवोत्निवासी
३८ शौल् तस्य पदे देशं शशास। ततः शौलि मृते सति
३९ अक्बोरः सुतो बाल्हानन् तस्य पदे देशं शशास। अपरं
अक्बोरः सुते बाल्हानानि मृते सति हदर् तस्य
पदे देशं शशास; पायूनगरं तस्य राजधान्यासीत्;
मिहेटबेल्नाम्नी तस्य भार्य्यासीत्, सा मट्रेदः कन्या
मेषाहवो दौहित्र्यासीत्।

४० एषाव उत्पन्ना नामस्थानकुलभेदात् ये ये राजान
४१ आसन् तेषां नामानि। राजा तिम्नो राजा अल्वा राजा
४२ यिथेत् राजा अहलीवामा राजा एला राजा पीनोन्
राजा किनस् राजा तैमन् राजा मिब्सर् राजा
४३ मग्दीयेल् राजा ईरम्। इमे स्वस्वराज्यभेदेन राज-
धानीभेदेन च इदोमो देशस्य राजान आसन्। एते-
षाम् इदोमीयानाम् आदिपुरुष एषौः आसीत्॥

३७ सप्तत्रिंशोऽध्यायः।

१ यूषफं प्रति भ्रातॄणां द्वेषः ५ यूषफः स्वप्नद्वयदर्शनं ९ याकूबा तस्य भ्रातॄन् प्रति प्रेरणं १२ शिखिमि तेषां मेषपालनं १५ तेषां साक्षात्कारः १८ यूषफं हन्तुं तेषां परामर्शः २१ इस्मा-येलीयेषु यूषफो विक्रयः २९ तस्य वस्त्रं शोणितयुक्तं दृष्ट्वा याकूबः शोचनम्।

१ याकूबा निजतातस्य प्रवासीयस्थाने किनान्देशे

प्रोषिते सति तं यद् घटितं तस्य विवृतिः। यूषफ् २
सप्तदशवत्सरवयसि निजभ्रातृभिः सार्द्धं पशुव्रजान्
अचारयत्, स निजतातस्य भार्य्ययो र्बिल्हासिल्पयोः
सुतानां सहचर आसीत, तेषाञ्च सहजानां कुव्यव-
हारं स्वीयतातस्य समीपे गदितवान्। स यूषफ् इस्रा- ३
येलो वार्द्धक्यवयसः सुतः तस्मात् इस्रायेल् सकल-
सुतेभ्योऽधिकं तस्मिन् अप्रीयत, नानावर्णम् उत्तरीयं
निर्म्माय च तस्मै दत्तवान्। किन्तु सकलसुतेभ्योऽधिकं ४
यूषफि प्रीयते, इति विलोक्य तस्य भ्रातृभि स्तदारभ्य
तस्मिन्नतीयितत्वात् तं प्रति क्षेमवचनं वक्तुं नाशक्यत।

अनन्तरं यूषफ् स्वप्नं दृष्ट्वा निजभ्रातृभ्यस्तं कथ- ५
यामास; तेन तैः सोऽधिकम् ऋतीयितः। फलतः ६
कथितवान्, अहं स्वप्नमेकं दृष्टवान्, तं निवेदयामि
शृणुत। पश्यत वयं क्षेत्रे शस्यमुष्टिं अवध्नीम, तत्र मम ७
शस्यमुष्टिरुत्तिष्ठन् अस्थात्, किन्तु युष्माकं शस्यमुष्टय-
श्चतुर्दिक्षु तिष्ठन्तो मम शस्यमुष्टिं प्राणमन्। तेन तस्य ८
भ्रातरस्तं जगदुः किं त्वमस्माकं उपरि निश्चितं
राजत्वं करिष्यसि? किमस्माकम् उपरि प्रभविष्यसि?
ततस्ते तस्य तस्मात् स्वप्नात् कथाय.स्च तमतीव
समृतीयितवन्तः।

९ अनन्तरं यूषफ् अपरैकं स्वप्नं दृष्ट्वा भ्रातृणां समक्षं
कथितवान, पश्यताहम् अपरमेकं स्वप्नं दृष्टवान्, पश्यत
१० सूर्य्यचन्द्र एकादश नक्षत्राणि च मां प्राणमन्। किन्तु
यूषफ् स्वीयपितु भ्रातृणाञ्च साक्षात् तं गदितवान्
तदा तस्य पिता तं तर्जयन् उक्तवान् त्वया कीदृशोयं
स्वप्नो दृष्टः? अहं तव माता भ्रातरश्च वयं भूमौ तिष्ठन्तः
११ किं त्वां प्रणंस्यामः? ततस्तस्य भ्रातरस्तं प्रत्यैर्ष्यन्, किन्तु
तत्पिता तां कथां मनसि निदधे।

१२ अपरं यूषफो भ्रातरः पितुः पशुव्रजान् चारयितुं
शिखिमं जग्मुः, तत इस्रायेल् युषफं जगाद तव भ्रातरः
१३ किं शिखिमि पशुव्रजान् न चारयन्ति? आगच्छ
त्वामहं तेषां सन्निधिं प्रेषयामि; ततो यूषफ् उक्तवान्
अहमुपस्थितोस्मि। तदानीम् इस्रायेल् तं जगाद,त्वं
गत्वा तव भ्रातरः पशुव्रजाश्च सकुशलाः सन्ति न वेति
विलोक्य मां वार्त्तां वद। इत्थं स हिब्रोण उपत्यकातो
यूषफं विसृष्टवान् स च शिखिमं गतवान्।

१५ तदानीम् एको मनुजो यूषफं प्रान्तरे भ्रमन्तं वीक्ष्य
पप्रच्छ,त्वं किं मृगयसे? स उक्तवान् निजसहजान् गवे-
१६ षये ; ते कुत्र पशुव्रजान् चारयन्ति? विनयेहं तन्मां
वद। स मनुज उदितवान,त इतः गतवन्तः, यतो

वयं दोथनं यास्याम इति वाचं तेषाम् अश्रौषम्; अतो
यूषफ् पश्चात् पश्चात् गत्वा दोथनि निजभ्रातॄन् १७
साक्षात् चकार।

अपरं तस्य तेषां समीपगमनकाले ते दूरात् तं १८
दृष्ट्वा हन्तुं मन्त्रयित्वा परस्परं जगदुः, पश्यतायं
स्वप्नदर्शक आगच्छति। आगच्छ वयमिमं हत्वा कस्मिं- १९
श्चित् अवटे निक्षिपाम; पश्चात् कश्चन हिंस्रो जन्तुः २०
तमखादत् इति वाचं वदिष्यामः, तेन तस्य स्वप्नानां
किं भविष्यतीति पश्यामः। किन्तु रूबेन् तत् श्रुत्वा २१
तेषां करेभ्यस्तम् अवितुं कथयामास, नहि, वयं तं न
हनिष्यामः। रूबेन् तेषां करेभ्यस्तं रक्षित्वा पितुः समीपं २२
प्रहेतुम् इच्छन् पुनस्तान् अवदत्; एतस्य शोणित-
पातम् अकृत्वा तं प्रान्तरीयावटमध्ये पातयत, किन्तु
तं प्रति करान् मोत्तोलयत।

अनन्तरं यूषफि भ्रातॄणां समीपमागते ते तस्य २३
गात्रात् वसनम्, अर्थात् नानावर्णवस्त्रं बलात् गृहीत्वा
तम् अवटमध्ये पातयामासुः; किन्तु सोऽवटो रिक्तस्तत्र न २४
तोयमासीत्। अनन्तरं ते भोक्तुम् उपविश्य वीक्ष्य २५
ददृशुः; गिलियद एको मिवष इस्मायेलीयलोका
महाङ्गवाहनेन सुगन्धिद्रव्याणि गुग्गुलु गन्धरसान

२६ आदाय मिसर्देशं गच्छन्ति। तदानीं यिहूदा भ्रातॄन्
उवाच, भ्रातृहननात् शोणितगोपनाच्च अस्माकं को
२७ लाभः? आगच्छत वयं तं न हिंसित्वा एतेषाम् इस्मा-
येलीयानां करेषु विक्रीणाम, यतः सोऽस्माकं भ्राता-
२८ स्माकं मांसस्वरूपश्च; ततस्तस्य भ्रातरोऽङ्गीचक्रुः। तदानीं
तेषु मिदियन्वासिवणिक्षु समीपमागतेषु ते यूषफं
गर्त्तात् आकृष्य प्रोत्तोलयामासुः; तत इस्मायेलीयानां
विंशतिरूप्यमुद्रा गृहीत्वा तेषां करेषु तं व्यक्रीणन्;
ततस्ते यूषफं मिसर्देशं निन्युः।
२९ अनन्तरं रूबेन् परावृत्य गर्त्तसमीपं जगाम, यूषफ्
३० गर्त्ते नास्तीति विलोक्य स निजवसनं चिच्छेद। भ्रातॄणां
समीपं गत्वा च जगाद, बालको नास्ति, अहमिदानीं
३१ कुत्र गमिष्यामि? ततः परं ते यूषफो वसनं आदाय
छागवत्समेकं मारयित्वा तस्य शोणितं तेन खचित-
३२ वन्तः। अनन्तरं तस्य पितुः समीपं तत् नानावर्णं
वसनं प्रेषयामासुः कथयामासुश्च, वयम् एतावन्मात्रं
३३ प्राप्ताः, इदं तवात्मजस्य वसनं भवति न वा? ततः स तत्
परिचीय कथितवान्, इदं मम पुत्रस्य गात्रीयवसनं
भवति; कश्चित् हिंस्रो जन्तुस्तं भक्षितवान्, यूषफ्
३४ निश्चितं खण्डखण्डीभूतः। तदानीं याकूब् निजवस्त्रं

छित्त्वा कटौ शणं परिधाय पुत्राय बहुदिनानि
शुशोच। अनन्तरं तस्य कन्या पुत्राः सर्व्वे उत्थाय तं ३५
सान्त्वयितुं यतितवन्तः, किन्तु स प्रबोधं न मत्वा कथि-
तवान्, अहं शोकेन पुत्रसमीपं परलोकं गमिष्यामि,
इत्थं तस्य पिता तदर्थं रुरोद। अनन्तरं ते मिदिय- ३६
नीया यूषफं मिसरं नीत्वा पोटीफर्नामकस्य फिरौणो
रक्षकसेनापतेः समीपे तं विक्रीतवन्तः।

### ३८ अष्टत्रिंशोऽध्यायः।

१ यिहूदातत्पुत्रवधूनां एर्ओनन् प्रभृतीनां विवृतिः १२ भार्य्यामरणात् परं यिहूदा तिम्नागमनं १५ तदीयपुत्रवधूपगमनं २४ तस्य दोषाविष्करणं २७ तस्य पुत्रवध्वाः पेरस् सेरह इति सुतद्वयजननञ्च।

तदानीं यिहूदा निजभ्रातॄणां समीपात् प्रस्थाय अदुल्लमीय- १
हीरानाम्न एकमनुजस्य समीपं गत्वा तत्र शूय- २
नामकस्य किनानीयपुरुषस्य कन्यामेकं विलोक्य तामा-
दायाभिजगाम। ततः सा गर्भिणी भूत्वा पुत्रमेकं ३
प्रसूय तस्य नामधेयम् एर् इति चकार। पुनः सा ४
गर्भवती भूत्वा पुत्रं प्रसूय तस्य नामधेयम् ओनन्
इति चकार। पुनरपि तस्या गर्भे सति सा सुतं प्रसूय ५
तस्य नाम शेलेति चकार; एतस्य जन्मकाले यिहूदाः
किषीवि स्थितवान्। ततो यिहूदाः तामरनामिकां ६

७ कन्याम् आनीयज्येष्ठपुत्रम् एरं विवाहयामास, किन्तु
यिहूदा ज्येष्ठपुत्र एर् परमेश्वरस्य साक्षात् दुष्टोऽभवत्
८ तदा परमेश्वरस्तं व्यनाशयत्। ततो यिहूदा ओननं
जगाद, त्वं निजभ्रातु र्भार्य्यां विवह, तामभिगम्य भ्रातु-
९ र्वंशम् उत्पादय। किन्तु स वंशः स्वीयो न भविष्यतीति
विज्ञाय स भ्रातृभार्य्याम् अभिगम्यापि भ्रातुर्वंशोत्पाद-
१० नानिच्छया भूमौ शुक्रं पातयामास। तस्मात् तस्यै-
तादृशेन कर्म्मणा परमेश्वरोऽसन्तुष्टः सन् तमपि नाशि-
११ तवान्। तदानीं यिहूदा स्वां तामर्नामिकां पुत्रवधूं
बभाषे, यावत् मम शेला पुत्रो युवा न भवति, तावत्
त्वं विधवा सती निजपितृगेहे तिष्ठ; यतः सोऽचिन्त-
यत् चेत् भ्रातराविव शेलापि म्रियते; तस्मात् तामर्
गत्वा पितृसदने न्यवसत्।

१२ अपरं शूयस्य कन्याया यिहूदाभार्य्याया मरणात्
परं बहुदिनेषु गतेषु यिहूदाः सान्त्वनायुक्तः सन् अदु-
ल्लमीयो हीरानाख्य बन्धुना सह तिम्नां प्रति निज-
१३ मेषाणां लोमच्छेदकानां समीपं जगाम। तदानीं श्वशुरः
स्वीयमेषाणां रोमाणि छेत्तुं तिम्नां यातीति वार्त्तां
१४ कश्चित् तामरं कथयामास। ततस्तामर् विधवावसनं
विहाय आवरकवस्त्रं परिधाय स्वाम् आच्छाद्य ऐनमो

निकटे तिम्नामार्गपार्श्वे समुपविश्य तस्थौ ; यतः सा स्वयं
शेलो युवत्वे सत्यपि तेन सार्द्धं विवाहो नाभवत्।
तदानीं यिहूदास्तां विलोक्य वेश्यां विवेद, यतः सा १५
मुखमाच्छाद्य स्थिता। ततः स पुत्रवधूं परिचेतुम् १६
असमर्थः सन् मार्गपार्श्वे तामरः समीपं गत्वाब्रवीत्,
आगच्छ त्वामहम् अभिगमिष्यामि, तेन तामर् उवाच
त्वमुपगमनहेतो मह्यं किं दास्यसि? स कथितवान् १७
अजात् एकं छागवत्सं प्रेषयिष्यामि; तामर् अवदत्
यावत् तं न दास्यसि तावत् मह्यं किं बन्धकं दास्यसि?
यिहूदाः पृष्टवान् किं बन्धकं दास्यामि? तामरवादीत् १८
तव नामाक्षरं वलयं यष्टिश्च इति। तदानीं
स तामरे तानि सर्वाणि दत्वा तामभिगतवान्
ततः सा गर्भवती बभूव। पश्चात् तामर् उत्थाय १९
प्रतस्थे, आवरकं वसनं विहाय विधवावसनं परिदधे।
अनन्तरं यिहूदा तस्या योषितो बन्धकं प्रतीतुं मित्रा- २०
दुल्लमीयबन्धुना छागवत्सं प्रहितवान्, किन्तु स तां न
दृष्टवान्। अतः स तत्रत्यान् जनान् पृष्टवान्, एतस्य ऐ- २१
नमग्रामस्य समीपे मार्गपार्श्वे या वेश्या प्रोपाविशत्, सा
कुत्र? ते कथितवन्तः कापि वेश्यात्र न तिष्ठति। अनन्तरं २२
स यिहूदः समीपं गत्वा कथयामास, नाहं तां दृष्ट-

वान् तत्रत्या जनाश्च कथितवन्तः, स्थानेऽस्मिन् कापि
२२ वेश्या न तिष्ठति। तदा यिहूदा जगाद, तस्याः स्थाने
यदस्ति तत् सा गृह्णातु, कुतो वयं लज्जास्पदं भविष्यामः?
पश्यात्र छागवत्सं प्रहितवान्, किन्तु त्वं तां न दृष्टवान्।
२४ अपरं प्रायेण मासत्रये गते कश्चित् यिहूदां जगाद,
तव पुत्रवधूस्तामर् व्यभिचारिणी जाता, तेन तस्या
गर्भोऽभवत्; तदानीं यिहूदाः कथितवान् तां बहिरा-
२५ नीय वह्निना दाहय। अनन्तरं तस्यां बहिरानीतायां
सा श्वशुराय जगाद, यस्यैतानि वस्तूनि तस्मात्
पुरुषात् मम गर्भोऽभवत्; पुनरवदत्, एतानि वलय
२६ यष्टि मामाक्षराणि कस्य? वीक्ष्य परिचिनु। तदानीं
यिहूदाः स्वीयानि तानि वस्तूनि स्वीकृत्य कथितवान्
सा मत्तोऽपि महाधर्मिष्ठा, यतोऽहं तस्यै निजं शेलासुतं
न दत्तवान्, किन्तु यिहूदा तां पुन र्नाभिजगाम।
२७ अपरं तामरः प्रसवकाले उपस्थिते सति तस्या
२८ उदरात् यमजौ सुतौ जज्ञाते। तस्याः प्रसववेदनायां
समुपस्थितायां सुतैकस्य करो बहिर्बभूव; ततो धात्री
तस्य तस्मिन् करे रक्तसूत्रं बद्ध्वा बभाषे, बालकोऽयं
२९ ज्येष्ठो भविष्यति। किन्तु स निजकरम् आकृष्य नीत-
वान्, ततस्तस्य भ्राता भूमिष्ठो बभूव; तदा धात्री कथि-

तवतो त्वं कथं षिभिद्यागतोऽसि? तस्मात् तस्य नाम
पेरस् (भेदको) बभूव। पश्चात् रक्तसूत्रबद्धहस्तस्य भ्राता ३०
भूमिष्ठो बभूव, तस्य नाम च सेरहं चकार।

## ३९ ऊनचत्वारिंशोऽध्यायः।

१ पोटीफरो गेहे यूषफ उन्नतिः ७ पोटीफरो जायाया यूषफि प्रेमासक्तिः अभिलषिताप्राप्तिहेतोः तस्य मिथ्यापवादनं कारा[illegible]नञ्च।

यूषफि मिसरदेशमानीते सति फिरौन्राजस्य १
रक्षो मिस्रीय पोटीफर्नामा सैन्याधिपतिः तद्‌आना-
यीसमायेलीयनरेभ्यो यूषफं क्रीतवान्। किन्तु परमेश्व- २
रस्य साहाय्यात् यूषफ् श्रीमान् बभूव, निजमिस्रीयप्रभो
र्गृहे न्यवसत्। यतः परमेश्वरस्य साहाय्येन तेन कृतानि ३
सकलकर्म्माणि फलवन्ति भवन्तीति स प्रभुः स्वयं
दृष्टवान्। अतएव स तमनुग्रहस्य स्वीयसेवायां ४
नियुक्तवान्, स्वीयनिवेशनस्याधिपतिं कृत्वा तस्य करे
सर्व्वसम्पत्तिं समर्पयामास। इत्थं स यूषफं स्वीयनिवेश- ५
नस्य सकलसम्पत्तेश्चाधिपतिं चकार, तदारभ्य यूषफः
कारणात् तस्य मिस्रीयपुरुषस्य निवेशनं प्रति परमे-
श्वरस्यानुग्रहात् निवेशनस्य क्षेत्रस्य च सर्व्वसम्पत्तिं प्रति
तस्याशी र्बभूव। ततस्तेन यूषफः करे निजसर्व्वस्वस्य ६

तादृशो भारोऽर्पितो येन स्वयं भोजनपाने विना
कस्यापि कार्य्यस्य प्रवृत्तिं न ज्ञातवान् ।
७ यूषफ् रूपेण सौन्दर्य्येण च मनोहारी आसीत्, तत्का-
रणात् तस्य प्रभो र्जाया यूषफं निरीक्ष्य तं बभाषे, त्वं
८ मया सार्द्धं शेष्व । किन्तु यूषफ् तदनङ्गीकृत्य प्रभो
र्भार्य्यां जगाद, पश्य निवेशनेऽस्मिन् यदहं करोमि,
तस्य किमपि प्रभु र्नानुसन्धत्ते; स मम करे सर्व्वस्वम्
९ अर्पितवान् । अस्मिन् निवेशने मत्तमो महान् कोपि
नास्ति; त्वन्तु तस्य जाया, कारणादतः केवलं त्वां विना
मां प्रति किमपि वारितं नास्ति; तस्मात् कथम् एता-
दृशीं दुष्टतां कुर्व्वन् ईश्वरस्य गोचरे पातकं कर्त्तुं
१० शक्नोमि ? तथापि सा योषित् तया सार्द्धं शयितुं वा
तत्समीपे स्थातुं यूषफं प्रत्यहं आह्वयति, किन्तु यूषफ्
११ तत् नाङ्गीकरोति । अनन्तरम् एकदा कार्य्यवशात्
यूषफ् गृहमध्यं जगाम, तदा तत्रान्यभृत्याभावात्
मया सह शेष्वेति वदन्ती सा यूषफो वसनं धृत्वा
१२ चकर्ष । किन्तु यूषफ् तस्याः करे निजवसनं विहाय
१३ बहिः पलायाञ्चक्रे । तदानीं यूषफ् तस्या हस्ते
निजवस्त्रं परित्यज्य बहिः पलायित इति विलोक्य
१४ सा गेहस्य लोकान् आहूय बभाषे, स्वामी सार्द्धं-

अस्माभिः हास्यं कर्त्तुम् एतम् इब्रीयम् आनीत-
वान्; स मया शयितुं मम सन्निधिम् आगमत्। ततो- १५
ऽहम् उच्चैराह्वतवी ममोच्चैःशब्दं श्रुत्वा वसनं विहाय
बहिः पलायितः। अपरं सा स्वामिनो ऽटनागम- १६
नम् अपेक्ष्य तद् वसनं स्वसमीपे निदधे। अनन्तरं १७
स्वस्वामिनं तद्वाक्यानुसारेण ऊचे, त्वया य इब्रीयदा-
सोऽस्माकं आनायि, स मया सार्द्धं हास्यं कर्त्तुं समीपम्
आगमत्। किन्तु मया प्रोच्चैराह्वते स तद् वसनं परि- १८
त्यज्य बहिः पलायितः। तदानीं तव दासो मां प्रतीत्थं १९
कृतवान् स्वजायाया वदनात् एतां कथां श्रुत्वा यूषफः
प्रभुः क्रोधेन प्रज्वलितः सन् यूषफं नीत्वा राजवन्दिनां २०
स्थानस्थाने बन्धनालये स्थापितवान्। ततः यूषफ् तस्यां
कारायां तस्थौ। किन्तु यूषफं प्रति परमेश्वरस्य साहा- २१
य्यात् कृपातश्च कारारक्षी तम् अनुगृहीतवान्। अपरं २२

कारास्थितानां सर्व्वेषां भारं यूषफः करे समर्पयत्;
ततो वन्दिगणप्रवृत्तयो यूषफ आज्ञानुसारतः सर्व्व-
कर्म्माणि कर्त्तुमारेभिरे। स यूषफो हस्ते यद्यत् सम- २३
र्पितवान् तदनुसन्धानमपि न कृतवान्, यतः स यद्यत्
कृतवान् परमेश्वरस्तस्य सहायः सन् तत् तत् सफली-
कृतवान्।

## ४० चत्वारिंशोऽध्यायः ।

१ फिरौणः पानपात्रवाहकस्य मोदककारस्य च यूषफा सह कारायां निधानं ५ तयोर्द्वयोः स्वप्नकथनं यूषफा प्रकाशनं २० यूषफः कथानुसारात् तयोस्तत्फलनं पानपात्रवाहकस्याकृतघ्नत्वञ्च ।

१ अपरं मिसरो भूपस्य पानपात्रवाहकेन मोदककारेण
च स्वीयमिसरीयभूपतेः समीपेऽपराधे कृते फिरौण् तस्य
२ प्रधानपात्रवाहकं प्रधानमोदककारञ्च प्रति क्रुद्धः सन्
३ यस्य रक्षकसैन्याधिपतेः कारायां यूषफ् आसीत् तत्र
४ तौ बन्दीकृत्य स्थापितवान्। ततो रक्षकसैन्याधिपतिना यूषफो हस्ते तयोः समर्पितयोः ततो यूषफ् तौ सेवितुम् आरेभिरे। इत्थं तौ बहुदिनानि कारायां स्थितौ।

५ कारायां बद्धौ मिसरीयराजस्य पानपात्रवाहक
मोदककारौ द्वौ यामिन्याम् एकस्यां विधार्थविशिष्टौ
६ द्वौ स्वप्नौ ददृशतुः। ततो यूषफ् प्रभाते समीपं गत्वा
७ तौ विषण्णवदनौ ददर्श। तदानीं फिरौणो येऽधिपतयः तेन सार्द्धं प्रभोः कारायां बद्धा आसन्, तान् पप्रच्छ कुतो युष्माकं वदनान्यद्य विषण्णानि? तौ प्रत्यूचतुः
८ आवामुभौ स्वप्नं दृष्टवन्तौ, किन्तु तस्य फलवक्ता कोऽपि न विद्यते; तदा यूषफ् तौ जगाद, फलं बोद्धुं शक्तिः

किम् ईश्वरान् न जायते? विनयेऽहं युवयोः स्वप्नं मां
वदतं। तदानीं प्रधानपानपात्रवाहको निजस्वप्नकथां यूषफे ९
प्रकाश्य कथयामास, ग्रहं स्वप्ने द्राक्षालतामेकां दृष्टवान्। १०
तस्याः शाखात्रये पल्लविते तत्र पुष्पाणि जातानि स्तवके
स्तवके तस्याः फलानि पक्कानि जातानि। तदा मम हस्ते ११
फिरौणः पानपात्रस्य सत्त्वात् तत्र पात्रे द्राक्षाफलानि
निधाय निष्पीड्याहं फिरौणो हस्ते तत्पात्रं दत्तवान्।
ततो यूषफ् तस्मै कथयामास, तस्य फलमेतत् ताभि- १२
स्तिसृभिः शाखाभि र्दिनत्रयं बोध्यते। त्रयाणां १३
दिनानां मध्ये फिरौण् त्वां विचार्य्य तव पदे नियो-
जयिष्यति; तेन त्वं पूर्व्ववत् पानपात्रवाहको भूत्वा पुन-
रपि फिरौणो हस्ते पानपात्रं दास्यसि। किन्तु यदा १४
तव मङ्गलं भविष्यति, तदा मां स्मरिष्यसि, मदनुग्रहं
विधाय फिरौणो गोचरे मद्विषयिकां कथां कथयित्वा
मामस्याः कारायाः उद्धरिष्यसि। यत इब्रीयाणां देशात् १५
लोका मां निश्चितं चोरयित्वानयन्, किन्त्वहं यत्
कूपरूपे बन्धनालये बद्धो भवेयं तादृशं किमपि कर्म्म नात्र
स्थानेऽपि कृतवान्। अपरं प्रधानमोदककृत् तस्य कथाया १६
उत्तमं फलं निशम्य यूषफे कथयामास, अहमपि स्वप्नमेकं १७
दृष्टवान्, मम मस्तकोपरि शुक्लपिष्टकानां त्रीणि भाजना-

१८ न्यासन्। तदुपरस्थभाजने फिरौणो भोजनार्थानि
बहुविधानि पक्वान्नान्यासन्; ततः पक्षिण आगत्य मम
मस्तकोपरिस्थितात् भाजनात् आदाय तान्यभक्षन्।
तदा यूषफ् प्रत्यूवाच एतस्य फलमेतत्, ते त्रिभिः
१९ भाजनै र्दिनत्रयं बोध्यते। दिनत्रयमध्ये फिरौन् त्वां
विचार्य्य वृक्षोपर्य्युद्बन्धयति पक्षिणश्चागत्य तव शरी-
रात् मांसं खादिष्यन्ति।

२० ततः परं तृतीयदिवसे फिरौणो जन्मदिन उप-
स्थिते स सर्व्वेभ्यो निजदासेभ्यो भोज्यम् आसादयमास।
२१ तत्र सर्व्वेषां निजदासानां साक्षात् प्रधानपात्रवाहकं
२२ प्रधानमोदककृतञ्च विचारयाञ्चकार। फिरौन् स्वीयहस्ते
पानपात्रं दातुं प्रधानपानपात्रवाहकं तस्य निजपदे पुन-
रपि नियोजयामास; किन्तु यूषफा कथितार्थानुसा-
२३ रात् प्रधानमोदककृतं उद्बबन्ध। तथापि प्रधान-
पानपात्रवाहको यूषफं न सस्मार किन्तु विसस्मार।

४१ एकचत्वारिंशोऽध्यायः।

१ फिरौणः स्वप्नद्वयदर्शनं ८ पानपात्रवाहकस्य यूषफवार्त्ता कथनं १४ फिरौणो यूषफे निजस्वप्नकथनं २५ राज्ञः स्वप्नफलज्ञापनं उपदेशश्च ३७ यूषफ उन्नतिः ४६ मिसरि शस्यस्थापनं ५० यूषफः सुतद्वयजननं ५३ दुर्भिक्षारम्भश्च।

१ अनन्तरं द्वितीयवत्सरस्य शेषे फिरौन् इति स्वप्ने

ददर्श। स नदीतीरे तिष्ठति, तदा नद्याः सप्त सुन्दराः २
पुष्टा गाव उत्थाय प्रान्तरे चरितुं आरेभिरे। पश्चात् ३
सप्तान्याः क्षामाः कुत्सिता गावः सरित उत्थाय तटिन्या
स्तटे तासां गवां समीपे स्थिताः। अनन्तरं ताः क्षामाः ४
कुत्सिता गाव ताः सप्त हृष्टाः सुन्दरा गा अभक्षन्।
तदानीं फिरौणो निद्रा भग्ना। तदनन्तरं फिरौणि ५
निद्रिते सति द्वितीयवारं इति स्वप्नं दृष्टवान्;
एकस्मिन् वृन्ते सप्त स्थूला उत्तमाः शस्यमञ्जर्य्य उद- ६
तिष्ठन्। ततः पूर्व्वीयवायुना शुष्का अन्याः सप्त क्षीणाः ७
शस्यमञ्जर्य्य उदतिष्ठन् ताः सप्त क्षीणाः शस्यमञ्जर्य्यः
स्थूलाः सप्त मञ्जरी अग्रसन्त। अनन्तरं फिरौणो ८
निद्राभङ्गे सति स्वप्नमात्रो बभूव।

ततः परं प्रातःकाले तस्य मनस्युद्विग्ने स लोकान्
प्रहित्य मिसरदेशीयान् सर्व्वान् मायाविनो ज्ञानिन-
श्चाजूहवितवान्; किन्तु फिरौणा तेषां समीपे स्वप्न- ९
दृष्टकथायां कथितायां तेषां मध्ये कोपि फिरौणे
तत्फलं कथयितुं नाशक्नोत्। तदानीं प्रधानपानवाहकः १०
फिरौणं निवेदयामास, अद्य स्वीयापराधं स्मरामि।
फिरौण् द्वौ स्वीयभृत्यौ प्रति अर्थात् मां प्रधानमोदककारञ्च ११
प्रति क्रोधान्वितः सन् अस्मान् रक्षकसैन्याधिपतेः का- १२

रायां बद्धवान्। तत्र सोऽहञ्च द्वावेकस्यां यामिन्यां स्वप्ने
१२ दृष्टवन्तौ; द्वयोः स्वप्नयो र्द्विविधफले जाते। तत्र
साद्धमस्माभिः रक्षकसैन्याधिपते र्युवदास एक इब्रीय
आसीत्; आवाभ्यां तस्मै कथिते, स आवयोः स्वप्नार्थं
१३ कथितवान्; उभयोः स्वप्नयोः फले उक्तवान्। तत्र स
आवाभ्यां यादृशं फलं गदितवान् तादृशमेव घटितं;
अर्थात् महाराजो मां निजपदे नियुक्तवान् तं तद्-
बध्नात्।
१४ फिरौणि यूषफम् आनेतुं जनान् प्रहितवति
लोकास्तं कारातः चिप्रम् आनिन्युः। ततः स चौरं
कारयित्वा वसनान्तरं परिधाय फिरौणसमीप उप-
१५ स्थितवान्। तदा फिरौन् यूषफम् अवदत्, अहं स्वप्ने
यत् दृष्टवान्, तस्य फलं कोऽपि कथयितुं नाशक्नोत्;
किन्तु त्वं तत् श्रुत्वा तस्य फलं कथयितुं शक्नोषीति मया
१६ श्रुतम्। ततो यूषफ् फिरौणं प्रति जगाद, तदहं न
शक्नोमि, किन्त्वीश्वरः फिरौणं मङ्गलयुक्तम् उत्तरं
१७ वदिष्यति। फिरौन् जगाद, स्वप्नेऽहं तटिनीतटे स्थित-
१८ वान्। तदा सरितः सप्तपुष्टाः सुन्दराश्च गाव उत्थाय
१९ प्रान्तरे चरितुम् आरभन्त। अनन्तरं मिसरि देशेऽहं
यादृशीः कदापि न दृष्टवान् तादृश्यः सप्त कुत्सिताः

कृशास्त्वपरा गाव उदतिष्ठन्। अपरं ताः कृशाः कुत्सि- २०
तास्च गावः ताः पूर्व्वीया पुष्टाः सप्त गा अग्रसन्। किन्तु २१
ताभिस्तासु ग्रस्तासु ग्रस्ता इति बोधो नाभवत्; यतस्ताः
पूर्व्ववत् कुत्सिता एव स्थिताः; तदा मम निद्राभङ्गोऽ-
भवत्। अनन्तरम् अहं स्वप्ने पुनरपश्यम् एकस्मिन् वृन्ते २२
स्थूलान्युत्तमानि सप्त कणिशान्युदतिष्ठन्। ततः परं २३
पूर्व्वीयवायुना शुष्काणि क्षीणानि म्लानानि च सप्त
कणिशान्युदतिष्ठन्। अपरं तानि क्षीणानि म्लानानि २४
च सप्त कणिशानि तानि स्थूलान्युत्तमानि च सप्त
कणिशान्यग्रसन्। इति स्वप्ने दृष्टम् अहं मायाविभ्यः
कथितवान्, किन्तु कोऽप्यस्य फलं वक्तुं नाशक्नोत्।

तदानीं यूषफ् फिरौणं प्रत्युवाच, फिरौणो द्वयोः २५
स्वप्नयोः फलमेकमेव; ईश्वरो यत् कर्त्तुम् उद्यतोऽस्ति
तदेव फिरौणं ज्ञापितवान्। ता उत्तमाः सप्त गावः २६
सप्तवत्सरस्वरूपाः तैः सप्तभिः कणिशैश्च सप्त वत्सरा
बोध्यन्ते; द्वयोः स्वप्नयोः समानत्वं। अपरं तत्पश्चात् २७
उत्थिता याः कृशाः कुत्सिताश्च सप्त गावः ता अपि
सप्तवत्सरस्वरूपाः; पूर्व्वीयपवनेन शुष्काणि यानि सप्त
रिक्तानि कणिशानि, तानि दुर्भिक्षस्य सप्त वत्सरा
भविष्यन्ति। अहं फिरौणे कथयामि ईश्वरो यत् २८

२९ कर्त्तुम् उद्यतोऽस्ति तत् फिरौणं दर्शितवान्। पश्यतु
पूर्व्वं सकलमिसर्देशे सप्त वत्सरा अतीव सुभिक्षा भवि-
३० ष्यन्ति। पश्चात् सप्त वत्सरा स्तथा दुर्भिक्षा भविष्यन्ति
३१ यथा मिसर्देशस्य सर्व्वं सुभिक्षत्वं विस्मारिष्यते। तेन
दुर्भिक्षेण देशो नंक्ष्यति, तेन दुर्भिक्षेण पूर्व्वीयं सुभि-
३२ क्षत्वं नानुभाविष्यते च; तदतीवासह्यं भविष्यति। फिरौणो
वारद्वय दृष्टस्वप्नस्य फलमेतत्, ईश्वर एतत् निश्चितं
३३ कृत्वा तूर्णं घटयिष्यति। अतएव फिरौण् एकं विवेचकं
ज्ञानिपुरुषं चेष्टित्वानीय तं मिसर्देशोपरि नियुनक्तु।
३४ अपरं फिरौण् एतत् कर्म्म करोतु; ये सप्त वत्सराः
सुभिक्षा भविष्यन्ति तत्र काले देशेऽध्यक्षान् नियुज्य
३५ मिसर्देशात् पञ्चमांशं गृह्णातु। पश्चात् ते तदुत्तम-
वत्सराणां शस्यानि संगृह्णन्तु प्रतिनगरं भोजनार्थं
३६ फिरौणः स्थाने तत् सञ्चित्य स्थापयन्तु च। इत्थं मिस-
र्देशे भाविदुर्भिक्षस्य सप्तसु वत्सरेषु देशस्थितानां कृते
सञ्चितभक्ष्येषु स्थितेषु दुर्भिक्षात् देशो न नंक्ष्यति।
३७ तदानीं फिरौणः तदीयसकलदासेयानाञ्च दृष्टौ
३८ कथैषा उत्तमा बभूव। ततः फिरौण् भृत्यान् उवाच,
एतस्य तुल्यः पुरुषो यत्रेश्वरस्यात्मास्ते, एतादृश-
३९ मन्यं कं प्राप्स्यामि। तदा फिरौण् यूषफं जगाद

ईश्वरस्त्वाम् एतानि ज्ञापितवान्; अतएव त्वत्तुल्यो वि-
वेचको ज्ञानी च कोऽपर आस्ते? त्वामहं निजगृहस्या- ४०
धिपतिकर्म्मणि नियुक्तवान्, मदीया सर्व्वे लोका त्वदी-
यवाक्यस्य वशीभविष्यन्ति; केवलं सिंहासनेहं त्वत्तो
महान् स्थास्यामि। फिरौन् यूषफं पुनरुक्तवान्, पश्य ४१
सकलमिसरदेशोपरि त्वामहं नियुक्तवान्। अनन्तरं ४२
फिरौन् निजकरात् अङ्गुरीयकं विमोच्य यूषफः करे
दत्त्वा तं सूक्ष्मवसनं पर्य्यधापयत् तस्य कण्ठे सुवर्ण-
हारञ्च ददौ। तं स्वस्य द्वितीयरथम् आरोहयामास, ४३
अपरं जना तस्याग्रेऽग्रे अब्रेक अब्रेक् (जानूनि पातयत
जानूनि पातयतेति) घोषयामासुः; इत्थं स तं सकल-
मिसरदेशस्याधिपतिं चकार। पश्चात् फिरौन् यूषफं ४४
जगाद, यद्यहं फिरौन् भवेयं तर्हि त्वदीयाज्ञां विना
सर्व्वदेशे कोपि लोको करौ पादौ च चालयितुं न
शक्ष्यति। अपरं फिरौन् यूषफो नाम साफिनत्पानेह ४५
(निगूढवाक्यप्रकाशकं) चकार। तत ओन्नगरीयस्य
पोटीफेरनामकयाजकस्य कन्याम् असिनतं तं विवा-
हयामास। अनन्तरं यूषफ् सकलमिसरदेशे यातायातं
कर्म्मारेभे।

त्रिंशद्वत्सरवयसि यूषफ् फिरौणः समक्षम् उप- ४६

स्थितवान्; तदानीं फिरौणः समीपात् प्रस्थाय मिस-
र्देशस्य सर्व्वत्र बभ्राम। अनन्तरं सुभिक्षस्य ते सप्त
४७ वत्सराः पृथिव्यां बहुशस्यानि जनयामासुः। तेषु सप्तसु
वत्सरेषु मिसर्देशे जातानि सर्व्वशस्यानि संगृह्य प्रति-
४८ नगरं सञ्चिचाय। अपरं यद्यन्नगरस्य चतुर्दिक्षु भूमौ
यावन्ति शस्यानि जातानि, तावन्ति तत्र तत्र नगरे
४९ सञ्चिचाय। इत्थं यूषफ् समुद्रीयसिकतावत् तावन्ति
शस्यानि संजग्राह यत् तेषां गणनं तत्याज यत स्तान्य-
परिमितान्यासन्।

५० अपरं दुर्भिक्षवत्सरेभ्यः पूर्व्वं ओन्नगरनिवासिनः
पोटोफेरयाजकस्य कन्यायाम् आसिनत्नामिकायां
५१ यूषफो द्वौ सुतौ जज्ञाते। ततो यूषफ् तयोर्ज्येष्ठस्य नाम
मिनर्शिं (विस्मृतिं) चकार; यतः स कथितवान् ईश्वरो
मम सर्व्वक्लेशं पितृगेहञ्च मां विस्मारितवान्। अपरं
५२ द्वितीयसुतस्य नाम इफ्रयिमं (फलवन्तं) चकार; यतः स
उक्तवान् देशे दुःखप्राप्तं माम् ईश्वरः फलवन्तं कृतवान्।
अनन्तरं मिसर्देशे सुभिक्षस्य ये सप्त वत्सरा आसन्
५३ ते सम्पूर्णतां गताः ततो यूषफो वाक्यानुसारात्
दुर्भिक्षस्य सप्तवत्सराणाम् आरम्भो बभूव। ततोऽन्य-
५४ सर्व्वदेशेषु दुर्भिक्षो बभूव, किन्तु समस्तमिसर्देशे

शस्यान्यासन्। सर्व्वेषु मिसर्देशेषु दुर्भिक्षे जाते प्रजा-
निवहः फिरौणः समीपे भक्ष्यार्थं प्रार्थयाञ्चक्रे; ततः ५५
फिरौन् सकलमिस्रीयान् बभाषे, यूयं यूषफः समीपं
यात, स यत् वदति तदेव कुरुत। तदानीं सर्व्वस्मिन् ५६
देशे दुर्भिक्षो बभूव, देशस्य सर्व्वस्थानेऽतीवप्रबले दुर्भिक्षे
सति यूषफ् सर्व्वस्थानीयं भाण्डागारं मोचयित्वा
मिस्रीयेषु शस्यानि विक्रेतुम् आरभत। अपरं नाना- ५७
देशीया नरा मिसर्देशे शस्यानि क्रेतुं यूषफः समीपं
आजग्मुः, यतः सर्व्वेषु देशेषु प्रबलो दुर्भिक्षो बभूव।

४२ द्विचत्वारिंशत्तमोऽध्यायः।

१ याकूबः पुत्राणां शस्यं क्रेतुं मिसरगमनं ५ यूषफः समीपे उपस्थानं ९ तैः सार्द्धं यूषफो व्यवहारं शिमियोनं बद्ध्वा विनयामीनम् आनेतुम् आज्ञापनं २१ तेषां आत्मकृतापराधस्मरणं २५ तेषां शाकपुटेषु मुद्रा निधाय यूषफस्तेषां विसर्जनं २९ स्वदेशं गत्वा पितुः समीपे सर्व्ववृत्तान्तकथनं ३५ याकूबो भयं विनयामीनं प्रेषितुम् अनङ्गीकरणञ्च।

अपरं मिसर्देशे शस्यानि सन्तीति वार्त्तां श्रुत्वा १
याकूब् स्वीयपुत्रान् उवाच, यूयं परस्परं विलोक्य कुत
आध्वे? स पुनरुदितवान्, पश्यत मया श्रुतं मिसरि २
शस्यानि सन्ति, तस्मात् यूयं तत्र गत्वास्मत्कृते शस्यं
क्रीत्वानयत; तेन वयं न मृत्वा जीविष्यामः। अनन्तरं ३
यूषफो दशभ्रातरः शस्यं क्रेतुं मिसरं जग्मुः। किन्तु ४

याकूब यूषफः सहोदरं बिन्यामीनं भ्रातृभिः साद्धं
न प्रहितवान् यतः स कथितवान् यदीमं प्रत्यपि
विपद् घटेत।
५ तदानीं याच्ञाकारिणां लोकानां सङ्गे इस्रायेल
सुताः शस्यानि क्रेतुं गतवन्तः, यतः किनान्देशेपि
६ दुर्भिक्ष आसीत्। यूषफ स्वस्य देशस्याधिपतित्वात्
सर्व्वदेशीयमनुष्येषु शस्यानि व्यक्रीणात् ततो युषफो
७ भ्रातर आगत्य भूमिष्ठाः सन्तस्तं प्रणेमुः। यूषफ्
निजसहजान् निरीक्ष्य परिचिचाय, किन्तु तेषां
समीपे अपरिचित इव व्यवहृत्य निष्ठुरवाक्यं जगाद,
यूयं कुत आगताः? ते कथयामासुः किनान्देशात्
८ शस्यं क्रेतुं आगताः स्मः। यूषफा निजसहजेषु परि-
चितेष्वपि ते तं परिचेतुं न शेकुः।
९ यूषफ तानधि पूर्व्वं स्वप्ने दृष्टं सकलं संस्मृत्य
तानवोचत्, यूयं सर्व्वे चारजना, एतद्देशीयम् अनावृत-
१० सकलस्थानानि निरीक्षितुं समागताः। ते कथयामासुः
हे प्रभो तव; भवत इमे दासाः शस्यं क्रेतुम् आगमन्।
११ वयं सकला एकस्य सुता विश्वास्या मनुजा भवन
१२ एते दासेयाः चारा नहि। सोऽवदत् नहि यूयं
१३ देशस्यानावृतस्थानानि वीक्षितुम् आगच्छत। ते

प्रत्यवदन् भवत इमे दासेया द्वादश भ्रातरः किनान्
देशनिवासिन एकस्यैव सुताः; पश्यतु अस्माकं पितुः
समीपेऽस्माकं कनिष्ठः सहजोऽस्ति एकजनस्तु न
विद्यते। यूषफ् तान् पुनरवोचत्, अहं युष्मभ्यं यत् १४
चारा इति गिरं कथितवान्, यूयं तएव भवत। अहं १५
युष्मान् परीक्षितुं फिरौण आयुषः शपथं कुर्व्वन् कथ-
यामि, युष्माकं कनिष्ठो भ्राता चेदत्र नायास्यति तर्हि
यूयमितः स्थानात् गन्तुं न शक्ष्यथ। युष्माकमेकं १६
प्रहित्य निजभ्रातरम् आनयत, तत्कालपर्य्यन्तं
युष्माभि र्बद्धै स्थातव्यं; ततो युष्माकं वचः सत्यं न वेति
परीक्ष्यैव ज्ञायिष्यते; नो चेत् फिरौण आयुषः शपथं
कुर्व्वन् कथयामि यूयमवश्यमेव चारा भवथ। अनन्तरं १७
यूषफ् तान् दिनत्रयं यावत् कारायां बद्धा स्थापित-
वान्। अपरं तृतीयेऽह्नि तान् उक्तवान् ईश्वरात् भीति १८
र्ममास्ति; यूयमित्थं कुरुत, तेन जीविष्यथ। यदि यूयं १९
विश्वास्यमानवा भवत तर्हि युष्माकमेकं सहजम् अस्यां
कारायां बद्धुं निधाय दुर्भिक्षहेतो र्गेहाय शस्यानि
नयत। यूयं निजकनिष्ठसहजम् मत्समीपम् आनीय २०
युष्मदुक्तगिरं प्रमाणीकुरुत तेन न मरिष्यथ।

ततस्ते तथैव कृतवन्तः; पश्चात् परस्परं जगदुः, २१

स्वीयसहजमधि वयं निश्चितापराधिन आस्महे, यतो-
ऽस्माकं समीपे तेन काकूक्तिः कृता, वयं तस्य मनसो
व्याकुलत्वं विलोक्यापि तां न श्रुतवन्त एतत् कारणात्
२२ अस्माकम् एषा विपत् अजनि। तदानीं रूबेन् तान्
अवादीत्, यूयमेतस्मिन् यूनि पापं माकार्ष्ट कथामिमाम्
अहं किं युष्मान् न गदितवान्? तथापि यूयं नामन्यध्वं
२३ पश्यतेदानीं तस्य शोणितस्य फलं दीयते। किन्तु यूषफ्
यत् तेषां संलापं बुद्धवान् तत् ते बोद्धुं नाशक्नुवन्, यतो
यूषफ् द्विभाषावादिना तैः सार्द्धं कथाम् अकथयत्।
२४ अनन्तरं यूषफ् तेषां समीपात् गत्वा चक्रन्द; पुनरागत्य
तैः सार्द्धं संलप्य तेषां मध्यात् शिमियोनं नीत्वा तेषां
साक्षादेव बबन्ध।
२५ अनन्तरं यूषफ् तेषां शाणपुटेषु शस्यानि पूरयित्वा
एकैकजनस्य शाणपूटे मुद्राः परावर्त्य दातुं तेभ्यः
पाथेयभक्ष्यं दातुञ्चाज्ञापितवान्; ततो भृत्या स्तथैव
२६ कृतवन्तः। अनन्तरं स्वस्वगर्द्दभस्योपरि शस्यानि निधाय
२७ तत्स्थानात् प्रतस्थिरे। किन्तूत्तरणस्थानं प्राप्य एकः
स्वीयगर्द्दभाय भक्ष्यं दातुं शाणपुटं मोचयित्वा निज-
मुद्रा ददर्श, यतः शाणपुटस्य मुखएव मुद्रा आसन्।
२८ तदानीं स सहजान् जगाद, मम मुद्रा प्रत्याहृताः

पश्यतैता मम शाणपुटे सन्ति। तदा तेषां मनांसि
प्रोद्विज्यन्त बिभ्यतश्च परस्परं प्रोक्तवन्तः ईश्वरोऽस्मान्
प्रति किमिदं कृतवान् ?

अनन्तरं किनान्देशे निजपितु र्याकूबः समीपं २९
प्राप्य स्वेषु यद्यद् अघटत, तत्सर्व्वं तं विज्ञाप्य जगदुः,
स देशाधिपतिरस्मान् देशचारान् ज्ञात्वा निष्ठुर- ३०
वचनं भाषितवान। ततोऽस्माभिः स उदितः, वयं चारा ३१
न भवामः विश्वास्यमानवा। वयं द्वादश भ्रातरः सर्व्वे ३२
एकपितुः सुताः; अस्माकं मध्यादेको नास्ति पितुः समीपे
किनानदेशे कनिष्ठः सहज एक आस्ते। तदानीं स ३३
देशाधिपतिरस्मभ्यम् अकथयत, अनेनाहं युष्मान् सत्य-
वादिनो बोद्धुं शक्नोमि; यदि यूयं स्वेषाम् एकं सहजं
मम सन्निधौ निधाय स्वेषां गेहस्य दुर्भिक्षकारणात्
शस्यानि गृहीत्वा यास्यथ, निजकनिष्ठं सहजञ्च मत्समीपं ३४
आनेष्यथ, तदा यूयं याथार्थिका लोका भवत, चारा
नहीति ज्ञास्यामि। पश्चात् युष्माकं सहजं युष्मभ्यं दा-
स्यामि ततो यूयम् अस्मिन् देशे वाणिज्यं कर्त्तुं शक्ष्यथ।

अनन्तरं तैः शाणपुटेभ्यः शस्येषु उन्मारितेषु सर्व्वे ३५
स्वस्वशाणपुटेषु मुद्राग्रन्थिं प्रापुः। तदानीं सकलमुद्रा-
ग्रन्थीं विलोक्य तेषां पिता ते च बिभ्युः। तदा तेषां ३६

पिता याकूब् उक्तवान्, यूयं मां पुत्रहीनं कुरुथ; पश्यत
यूषफ् नास्ति, शिमियोन् नास्ति, पुनश्च बिन्यामीनं
३७ नेतुम् इच्छथ; एतत् सर्व्वं मम विरुद्धं भवति। ततो
रूबेन् निजतातं जगाद, यद्यहं तं तव समीपं नानयामि,
तर्हि मम द्वौ सुतौ हनिष्यसि; त्वं मम करे बिन्यामीनं
३८ समर्पय, तमहं पुनश्च तव समीपम् आनेष्यामि। तदानीं
तेन कथितं, मम पुत्त्रो युष्माभिः सार्द्धं न यास्यति, यत-
स्तस्य सहोदरस्य मरणात् स एकएव जीवन् आस्ते;
यूयं येन मार्गेण याथ, तत्र यद्यस्यापि कापि विपत्
घटेत, तर्हि शोकात् एतैः पक्वकेशैः सार्द्धं मां परलोकं
प्रेषयिष्यथ।

४३ त्रिचत्वारिंशत्तमोऽध्यायः।

१ शेषे याकूबा बिन्यामीनः प्रेरणं १५ भ्रातृणां यूषफो गेह-गमनं अधिपतेः समीपे तेषां भयाकथनं २५ यूषफे पारि-तोषं दत्त्वा तेन सार्द्धं भ्रातृणां भोजनञ्च।

१ अनन्तरं देशे महादुर्भिक्षे तिष्ठति ते मिसर्देशात्
२ यानि शस्यान्यानयन् तानि सर्व्वाणि भक्षितानि। तदा
तेषां तात स्तान् बभाषे, यूयं पुनर्गत्वा किञ्चित् शस्यम्
३ अस्मत्कृते क्रीणीत। ततो यिहूदा स्तं गदितवान्, सोऽधि-
पति र्दृढं प्रतिज्ञाय कथितवान्, युष्माकं भ्राता युष्माभिः
सार्द्धं न स्थितश्चेत् तर्हि युष्माभि र्मम वदनं वीक्षितुं

न गच्छते। तस्मात् यदि त्वम् अस्माभिः सार्द्धं सहजं ४
प्रेरयसि, तर्हि वयं त्वत्कृते शस्यं क्रेतुं यास्यामः। यदि ५
न प्रेरयसि, तर्हि वयं न यास्यामः; यतः सोऽधिपतिः
कथितवान्, युष्माकं सहजे युष्माकं सङ्गे न तिष्ठति सति
यूयं मम वदनं वीक्षितुं न प्राप्स्यथ। तत इस्रायेल् ६
कथयामास युष्माकम् अपर एकः सहज आस्ते इति
मनुजस्य तस्य समीपे कथयन्तो मां प्रति कुव्यवहारमिमं
कुतः कृतवन्तः? ते कथितवन्तः, तेनास्मान् अस्माकं ७
ज्ञातींश्च प्रति यथा परिपृष्टं, युष्माकं तातः किम-
द्यापि जीवन् आस्ते? युष्माकं किम् अपरः सह-
जोऽस्ति? तथा वयं उत्तरं अवोचाम; किन्तु
युष्माकं भ्रातरम् अत्रानयतेतिवाक्यं स वदिष्यतीति
केन प्रकारेण ज्ञास्यामः? अनन्तरं यिहूदा निजपितरम् ८
इस्रायेलं बभाषे, त्वं मया सार्द्धं तं युवानं प्रेषय; वयम्
उत्थाय यात्रां कुर्म्मः, तेन वयं त्वं बालकाश्च सर्व्वएव
रक्षिता भविष्यामः न मरिष्यामः। अहं तस्य लग्नकोऽभू- ९
वम् एनं मम करात् ग्रहीष्यसि; यद्यहम् एनम आनीय
तव सम्मुखे न स्थापयामि, तर्हि स दोषः सर्व्वदा मयि
वर्त्तिष्यते। यद्यस्माकम् एतावान् विलम्बो नाभविष्यत् १०
तर्हि वयं द्वितीयवारं परावृत्यागन्तुम् अशक्ष्याम।

११ तदानीं तेषां जनक इस्रायेल् तान् अवदत्, यदीत्थं
भवति, तर्हि कर्म्मैकं कुरुत ; स्वेषां पात्रेषु देशस्यास्य
फलान्युत्तमानि गृह्णीत; तस्मायधिपतये पारितोषिकं
दातुं वणिग्द्रव्यं गन्धरसं वटनं द्राक्षां गुग्गुलुं मधु च
१२ किञ्चित् किञ्चित् गृह्णीत। अपरं स्वेषां करेषु द्विगुणा
मुद्रा गृह्णीत, युष्माकं प्राणपुटानां मुखेषु या मुद्रा-
परावृत्यागता स्ताश्च करेषु गृहीत्वा यात; को जानाति
१३ तत्र वा भ्रान्तिः संजाता। अपरं निजभ्रातरं गृहीत्वा
उत्थाय पुनरपि तस्याध्यक्षस्य सन्निधिं गच्छत।
१४ सर्व्वशक्तिमान् ईश्वरो युष्मान् तेनाधिपतिना तयानु-
गृहीतान् करोतु यथा सोधिपतिः स्वयं युष्माकम्
अन्यभ्रातरं विन्यामीनञ्च परित्यक्ष्यति ; किन्तु यदि
मया पुत्त्रहीनेन भवितव्यं तर्हि पुत्त्रहीनोऽभवम्।
१५ तदा ते तदुपढौकनीयं द्रव्यं द्विगुणमुद्रा विन्-
यामीनञ्च नीत्वा उत्थाय मिस्रं गत्वा यूषफः
१६ समक्षम् अतिष्ठन्। यूषफ् तैः सार्द्धं विन्यामीनं
विलोक्य निजगृहाधिपतिं गदितवान् एतान् मनुजान्
मम निवेशनं नय पशूंश्च मारयित्वा भक्ष्यद्रव्या-
१७ ण्यासादय ; इमे मध्याह्ने मया सार्द्धं भोक्ष्यन्ते। ततः स
यूषफ आदेशानुसारात् तान् यूषफो निवेशनं नीतवान्।

किन्तु तेषां यूषफा निवेशननयनात् ते भीताः परस्परं १८
गदितवन्तः, पूर्व्वम् अस्माकं शाणपुटेषु या मुद्राः प्रत्या-
वृत्य गताः तत्कारणात् अस्मान् आनीतवान्; इदा-
नीम् अस्मदिरुद्धं तं दोषम् आरोप्य समाक्रम्यास्माकं
गर्द्दभानपि गृहीत्वास्मान् क्रीतदासानिव स्थापयिष्यति।
ते तदानीं यूषफो गृहाधिपतेः समीपं गत्वा गृहद्वारे १९
तिष्ठन्तः तेन सार्द्धं संलप्य कथयामासुः, हे महेच्छ वयं २०
पूर्व्वं शस्यानि क्रेतुम् आगच्छाम, किन्तूत्तरणस्थानं २१
गत्वा निजशाणपुटेषु मोचितेषु शाणपुटमुखे प्रति-
मनुजपरिमितमुद्रा प्राप्ताः। वयं ताः करेषु समानयाम, २२
शस्यानि क्रेतुञ्च मुद्रा आनयाम; किन्तु ता मुद्रा
अस्माकं शाणपुटेषु केन निहिता वयं तन्न जानीमः।
ततः स गृहाधिपतिः कथितवान् युष्माकं मङ्गलं २३
भूयात् मा भैष्ट युष्माकम् ईश्वरोऽर्थात् युष्माकं पैतृक
ईश्वरो युष्माकं शाणपुटेषु युष्मभ्यं गुप्तधनं दत्तवान्,
युष्माकं मुद्रा मम करे स्थिताः। अनन्तरं स शिमि- २४
योनं तेषां समीपम् आनीय तान् यूषफो गेहाभ्यन्तरं
नीत्वा पादान् प्रक्षालयितुं तोयं ददौ, ततस्तेषां गर्द्द-
भेभ्यो खाद्यद्रव्यम् अददात्।

अनन्तरं मध्याह्नात् पूर्व्वं यूषफ् आगमनसमये ते २५

पारितोषिकान्यमज्जयन् यतोऽत्रास्माभि र्भोक्तव्यम्
२६ इतिवाचं ते श्रुतवन्तः। ततो यूषफि गृहम् आगते
ते करस्थितानि पारितोषिकानि तस्मिन् गृहे निधाय
२७ भूमिष्ठाः सन्तः प्रणेमुः। तदानीं यूषफ् तेषां क्षेमं पृष्ट्वा
कथयामास, युष्माकं यस्य वृद्धतातस्य कथाम् अकथ-
यत, स किं क्षेमेणास्ते? स किम् अद्यापि जीवन् आस्ते?
ते प्रत्यूचुः, भवतो दासोऽस्माकं जनकोऽद्यापि जीवन्
२८ क्षेमेणास्ते। ततस्ते भूमिष्ठाः सन्तः प्राणमन्। तदानीं
२९ यूषफ् पश्यन् निजसहोदरं बिन्यामीनं विलोक्य कथ-
यामास, युष्माकं यस्य कनिष्ठसहजस्य कथामकथयत स
किमयम्? अपरं स कथितवान्, हे वत्स त्वामीश्वरोऽनु-
३० गृह्णातु। तदानीं यूषफोऽन्तःकरणे स्नेहस्योपस्थितत्वात्
स व्याकुलीभूय रोदितुं स्थानमन्विष्य क्षिप्रं निजकोष्ठं
३१ प्रविश्य तत्र रुरोद च। तदनन्तरं स वदनं प्रक्षाल्य बहि-
रागत्य धैर्य्यमवलम्ब्य भक्ष्याणि परिवेष्टुम् आदिदेश।
३२ ततो दासा यूषफे तस्य भ्रातृभ्यश्च तद्गृहे भोक्तृभ्यो
मिस्रिभ्यश्च पृथक् पृथक् परिवेषयामासुः, यत इब्रिभिः
सार्द्धं मिस्रियाणां भोजनव्यवहारो नासीत् ते मिस्री-
३३ याणाम् घृणीया आसन्। अनन्तरं निजसम्मुखे
तेषां ज्येष्ठं ज्येष्ठाधिकारानुसारात् कनिष्ठञ्च कनिष्ठा-

धिकारानुसारेण समुपवेशयामास, तेन परस्परं आश्चर्यं
मेनिरे। अपरं स स्वीयसम्मुखस्थिताद् भक्ष्यात् उत्थाप्य ३४
तेभ्यो दत्तवान्, किन्तु तेषां भागेभ्यो बिन्यामीनो भागं
पञ्चगुणाधिकं कृतवान्। ततस्ते पीत्वा तेन सार्द्धम्
आनन्दितवन्तः।

## ४४ चतुश्चत्वारिंशोऽध्यायः।

१ धनज्यान् प्रति यूषफः चातुरी ६ तस्य पानपात्रं बिन्यामीनः घ्राणपुटे स्थापनं १४ पुनरपि तेषां तत्समीपागमनं १८ यूषफं प्रति यिहूदाः कातरोक्तिः।

अनन्तरं यूषफ् निजगृहाधिपतिम् आदिष्टवान् १
एषां मानुषाणां घ्राणपुटानि यावत् शस्यं धरन्ति तावत्
शस्यं परिपूर्य्य देहि, अपरं एकैकशो मुद्रा स्तेषां घ्राण-
पुटानां मुखेषु स्थापय च। विशेषतः कनिष्ठस्य घ्राणपुटे २
तस्य शस्यक्रयणीयमुद्राभिः सह मम पानपात्रम् अर्थात्
रूप्यमयपात्रं निधेहि ; ततः स यूषफ आदेशानुसारेण
कृतवान्। अपरं प्रभाते सत्येव ते गर्द्दभैः सार्द्धं विसर्ज्जनं ३
प्राप्तवन्तः। किन्तु नगरात् तेषु बहुदूरं न गतेषु यूषफ् ४
निजगृहाधिपं जगाद, त्वम् उत्थाय तेषां मानुषाणां
पश्चाद् धावन् तान् धृत्वा वद, यूयम् उपकार-
परिवर्त्तेन कुतोऽपकारम् अकार्ष्ट ? मम प्रभु र्येन पीयते ५

येन स गणयति तत् पानपात्रं किमेतत् नहि? एतत्
कर्म्म करणात् यूयं दोषिणो जाताः।
६ ततः परं स तान् धृत्वा तथोक्तवान्, तदा ते
प्रति जगदुः, अस्माकं प्रभुः कुत एतादृशीं वाणीं वक्ति?
७ तव दासानां एतादृक् कर्म्मकरणं दूरे तिष्ठतु। पश्य
निजनिजशाणपुटे पूर्व्वं या या मुद्रा प्राप्ताः, किनान-
८ देशात् ताः पुनरपि तव समीपम् आनीतवन्तः, तर्हि
कथं निजप्रभो र्गृहात् सुवर्णं दुर्व्वर्णं वा चोरयिष्यामः?
९ तव दासानां मध्ये यस्य समीपे तत् प्राप्यते, स म्रिय-
१० ताम्; अपरं वयमपि प्रभोः क्रीतदासा भविष्यामः। ततः
स उक्तवान्, भद्रं युष्माकं कथानुसारादेव भवेत्; यस्य
समीपे तत् प्राप्यते, स मम दासो भविष्यति, किन्त्वन्ये
११ निर्दोषा भविष्यन्ति। तदानीं ते भूमौ स्वं स्वं शाणपु-
१२ टम् अवारोहयन् स्वं स्वं शाणपुटं मोचयामासुः। ततः
स गृहाधिपो ज्येष्ठमारभ्य कनिष्ठपर्य्यन्तं समाप्य शाण-
पुटेषु पात्रम् अन्विष्टवान्, तदा बिन्यामीनः शाणपुटे
१३ तत् प्राप्तं। अतएव ते स्वस्ववस्त्रं छित्त्वा स्वस्वगर्द्दभो-
परि शाणपुटानि निधाय पुनर्नगरम् जग्मुः।
१४ अपरं यिहूदास्तस्य भ्रातरश्च यूषफो गृहं पुनराययुः
यूषफि तत्र स्थिते सति ते तस्याग्रे भूमौ दण्डवत्

बभूवुः। तदा यूषफ् तान् अवदत्, यूयं किमिदं १५
कर्म्म कृतवन्तः? एतादृशोऽहं पुमान् अवश्यं गणयितुं
शक्नोमीति यूयं किं न जानीथ? ततो यिहूदा जगाद, १६
वयं प्रभोः समक्षं किमुत्तरं वदिष्यामः? किं वाक्यं वदि-
ष्यामः? कथं वा स्वान् निर्दोषान् करिष्यामः? ईश्वरेण
तव दासेयानां दुष्टता प्रकाशिता; पश्यतु वयं यस्य
स्थाने पानपात्रं प्राप्तं स च सर्व्व एव भवतो दासेया
अभवाम। ततो यूषफ् उक्तवान्, एतादृशं कर्म्म मत्तो १७
मा भूत्; यस्य स्थाने पात्रं प्राप्तं स एव मम दासो भवि-
ष्यति, किन्तु यूयं क्षेमेण पितुः समीपं यात।

ततो यिहूदाः समीपं गत्वा जगाद, हे प्रभो भवान् १८
फिरौणा समः, एतान् दासान् प्रति क्रोधो यदि न
प्रज्वलति, तर्हि प्रभोः कर्णगोचरे किञ्चित् निवेद-
यामि। युष्माकं पिता भ्राता वास्तीति? प्रभुरेतान् १९
दासान् अपृच्छत्; ततो वयं प्रभुं प्रत्यवदाम, अस्माकं
जनक आस्ते, स स्थविरः। अपरं तस्य वृद्धावस्थाया २०
एकः कनिष्ठः पुत्रोऽस्ति, तस्य भ्राता मृतवान्, स एव
तन्मातुः पुत्रोऽस्ति, तस्मात् पिता तस्मिन् स्निह्य-
ति। अनन्तरम् एतान् दासान् भवान् अवादीत्; २१
यूयं तं मम समीपम् आनयत, तं द्रक्ष्यामि, तदा

२२ वयम् अवदाम, स युवा जनकं त्यक्तुं न शक्ष्यति,
यतः पितरं परित्यज्य तस्मिन् आगते तातो
२३ मरिष्यति। ततस्त्वं दासान् एतान् अवादीः, युष्माकं
सर्व्वं कनिष्ठे सहजे नागते, यूयं मम वदनं न द्रक्ष्यथ।
२४ पश्चात् तव दासेया एते पितुः समीप उपस्थाय तं
२५ प्रभोरेताः कथाः अवदाम। अपरं जनको गदितवान्
२६ यूयं पुनर्गत्वास्मत्कृते किञ्चित् भक्ष्यं क्रीणीत। ततो
वयं अवदाम, यातुं न शक्ष्यामः, कनिष्ठो भ्राता यद्य-
स्माभिः सार्द्धं तिष्ठति, तर्हि यास्यामः; यतः कनिष्ठे सहजे
सङ्गे न तिष्ठति, वयं तस्याधिपस्य वदनदर्शनमपि प्राप्तुं
२७ न शक्ष्यामः। ततस्तव दासेयोऽस्माकं जनकः कथितवान्
मम तस्यां भार्य्यायां द्वावेव पुत्रौ जातौ, तत् युष्माभि
२८ र्ज्ञायते। तयोरेकस्मिन् गते, कथितवानहं स खण्ड-
खण्डीभूय छिन्नोऽभवत्; तदारभ्य तमहं द्रष्टुं न
२९ प्राप्तवान्। इदानीं मम सन्निधेस्तस्मिन् नीते, यदि
तमपि काचित् विपत् प्राप्नोति, तर्हि यूयं शोकात्
३० अनेन पक्वकेशेन मां परलोकं प्रेष्यथ। अतो भवद्दासो
योऽस्माकं पिता तत्समीपेऽस्माभिरुपस्थाने कृते, यद्य-
स्माकं सङ्गे स युवा न तिष्ठति, तर्हि स युवान-
३१ मेनम् अदृष्ट्वा तत्क्षणात् मरिष्यति। यतस्तस्य प्राणा

बालस्य प्राणे बद्धाः सन्ति, तेन तव दासेयाः शोकेन
पक्ककेशेन सार्द्धं तव दासं तमस्माकं जनकं परलोकं
प्रेषयिष्यन्ति। यस्मात् तव दासोऽहं निजपितुः समीपे ३२
एतस्य यूनः प्रतिभूः भवन् कथितवान्, यद्यहं तं तव
सन्निधिं नानयेयं, तर्हि पितुः समीपे सर्व्वदा दोषी
स्थास्यामि। अतोऽहं निवेदयामि, एतस्य यूनः परि- ३३
वर्त्तेन प्रभोः समीपेऽहं दासो तिष्ठामि, किन्तु युवानमेनं
सहजैः सार्द्धं विसृजतु। यत एष युवा मया सार्द्धं ३४
चेन्न याति, तर्ह्यहं केन प्रकारेण पितुः समीपं गन्तुं
शक्नोमि? अपरं पितरि या विपत् घटिष्यते तां केन
प्रकारेण द्रष्टुं शक्नोमि।

## ४५ पञ्चचत्वारिंशोऽध्यायः।

१ भ्रातृणां समीपे यूषफः परिचयनं, ईश्वरानुग्रहस्य प्रकाशनं पित्रे वार्त्ताप्रेषणं १६ यूषफो भ्रातृणामागमनात् फिरौणस्य तुष्टिः पाथेयं दातुमाज्ञा २५ यूषफो जीवनवार्त्तां निशम्य याकूबः प्रफुल्लत्वञ्च।

अनन्तरं यूषफ् समीपस्थजनानां साक्षात् अधैर्य्यः १
सन् जगाद, मम सम्मुखात् सर्व्वान् मनुजान् बहिः
कुरुत। तत्र कस्मिंश्चित् न तिष्ठति, यूषफ् निज-
सहजान् निजं परिचाययितुम् आरब्धवान्। ततः २
उच्चैरित्थं रुरोद यत् मिस्रीयाः फिरौणो गृहस्थिताश्च

३ सर्व्वे जनाः श्रुतवन्तः। यूषफ् निजभ्रातॄन् जगाद,
यूषफहं, मम जनकः किमद्यापि जीवत्यास्ते? किन्तु
तदीया भ्रातरस्तस्य समक्षम् उद्विग्ना अभवन्, तस्मात्
४ उत्तरं दातुं न शेकुः। अनन्तरं यूषफ् निजभ्रातॄन् अव-
दत्, विनयेहं मत्समीपम् आगच्छत, ततस्ते सन्निधिम्
ईयुः; तदा यूषफ् बभाषे, यूयं यं मिसरगामिषु व्यक्री-
५ णीत युष्माकं स यूषफ् सहजोहं। किन्तु युष्माभिरत्राहं
विक्रीत इत्यस्मात् मा खिद्यध्वं स्वेषु मा विरज्यध्वं; यतः
६ प्राणरक्षार्थम् ईश्वरो युष्माकमग्रे मां प्रेषितवान्। पश्यत
देशे द्वावेव वत्सरौ दुर्भिक्षौऽभवतां; अपरे पञ्च वत्सरा
एतादृशा भविष्यन्ति, तेषु कर्षणं शस्यकर्त्तनञ्च न भवि-
७ ष्यतः। ईश्वरः पृथिव्यां युष्माकं वंशं रक्षितुं महोपका-
रेण युष्मान् प्राणै जीवयितुं युष्माकमग्रे मां प्रेषित-
८ वान्। युष्माभिरहं प्रहित इति नहि, ईश्वरेण
प्रेरितोहम्, स मां फिरौणः पितरं तदीयगेहस्य
९ प्रभुं सर्व्वदेशस्याधिपञ्च कृतवान्। अतो यूयं पितुः
समीपं शीघ्रं गत्वा तं वदत, तव पुत्रो यूषफ् इत्थं उक्त-
वान्, ईश्वरो मां निःशेषमिसरदेशस्य प्रभुं कृतवान्; त्वं
१० मम सन्निधिम् आगच्छ, विलम्बं मा कुर्याः। त्वं पुत्र-
पौत्रादिभिः सार्द्धं पश्वादिसर्व्वस्वैः सार्द्धञ्च समागत्य

मम समीपस्थभवनाय गोशन्प्रदेशे वत्स्यसि। अहं तत्र ११
स्थाने त्वां पालयिष्यामि, नो चेत् ये पञ्च वत्सरा दुर्भिक्षाः
स्थास्यन्ति, तत्र सपरिवारस्य त्वदीयस्य सर्व्वस्य च
दारिद्र्यं भविष्यति। पश्यत कथामेताम् अहं स्वमुखेन १२
कथितवान्, तत् यूयं बिन्यामीन् भ्राता च निजनयनै
र्दृष्टवन्तः। अत एतस्मिन् मिसरदेशे ममैश्वर्य्यं यच्च १३
युष्माभिर्दृष्टं, तत् सर्व्वं मम पितुः समीपे कथयित्वा तं
शिघ्रमत्रानेष्यथ। अनन्तरं यूषफ् निजसहजस्य बिन- १४
यामीनः कण्ठं धृत्वा रुरोद, बिन्यामीनपि तस्य कण्ठं
धृत्वा चक्रन्द। अपरं यूषफ् अन्यसहजांश्च चुम्बित्वा १५
तेषां कण्ठेषु रुदितवान्; तदानीं तस्य सहजास्तेन
सार्द्धम् आलपितुम् आरेभिरे।

अपरं यूषफः सहजा आगमन्, इति जनरवे फि- १६
रौणो गृहं गते, फिरौण् तस्य दासेयाश्च सर्व्वे तुतुषुः।
अपरं फिरौण् यूषफं जगाद, त्वं निजसहजेभ्यः कथय १७
यूयमेतत् कर्म्म कुरुत। निजपशूनां भारपृष्ठानि समव- १८
नार्थं किनान्देशं गत्वा स्वीयपित्रा सार्द्धं सकलपरि-
वारान् मम सन्निधिम् आनयत; अहं युष्मान् मिसर-
देशस्य उत्तमं स्थानं दत्त्वा देशीयोत्तमानि द्रव्याणि
भोजयिष्यामि। इदानीं ममाज्ञयैतत् कर्म्म कुरुत, यूयं १९

मिसरः शकटानि गृहीत्वा निजबालकान् निजयो-
२० षितो निजजनकञ्च समानयत । तत्र निजद्रव्यादीनि
प्रति मा चिन्तयत, कस्मान्मिसर्देशीयोत्तमानि द्रव्याणि
२१ युष्माकं सन्ति । तत इस्रायेलः सुतास्तदनुसारेण चक्रुः
यूषफ् फिरौण आज्ञानुसारात् तेभ्यः शकटानि
२२ पाथेयानि च दत्तवान् । प्रतिजनं परिधानाय द्वे द्वे
युग्म वस्त्रे च दत्तवान् ; किन्तु विन्यामीने शतत्रय-
२३ रूप्यमुद्राः पञ्च युग्मवासांसि च ददौ । अपरं पितुः कृते
मिसरीयोत्तमवस्तूनां भाराक्रान्तान् दश गर्दभान्
पितुः पाथेयानां शस्यानां पूपानां तदन्यभक्ष्यवस्तूनाञ्च
२४ भाराक्रान्ता दश गर्दभीश्च प्रेषयामास । इत्थं यूषफा
निजसहजेषु विसृष्टेषु ते प्रतस्थिरे ; ततः स तान् उवाच,
सावधाना यूयं पथि मा विवदध्वम् ।
२५ इत्थं ते मिसर्देशात् प्रस्थाय किनान्देशे स्वपितुं
२६ याकूबः समीप उपतस्थुः । अपरं ते तं बभाषिरे, हे तात
यूषफ् अद्यावत् जीवन् आस्ते, स निःशेषमिसरदेश-
स्याधिपतिरभवत् ; अनया वाचा याकूबो हृदयं जडी-
२७ बभूव ; यस्मात् स तेषां वचसि न विशश्वास । तदानीं-
यद्वाक्यं यूषफ् तेभ्यः कथयामास, तत् सर्व्वं ते तं बभा-
षिरे ; ततः स यद्वा यूषफा प्रेषितानि वहनार्थानि

प्रकटानि ददर्श, तदा तेषां जनकस्य याकूबो मनः
प्रफुल्लं बभूव। तत इस्रायेल् कथयामास, मम पुत्रो २८
यूषफ् अद्ययावत् जीवन् आस्ते, एतदेव यथेष्टं; अहं
गत्वा मरणात् पूर्व्वं तं वीक्षिष्ये।

४६ षट्चत्वारिंशोऽध्यायः।

१ याकूबो बेर्शेबागमनं ईश्वरेण दर्शनं, ५ मिसरि यात्रा ८ तस्य वंशश्रेणिः २८ यूषफः याकोबः समागमे यूषफः कथा च।

अनन्तरम् इस्रायेल् निजसर्व्वस्वं गृहीत्वा यात्रां १
विधाय बेर्शेबायामुपस्थाय तत्र निजपितुरिस्हाक
ईश्वरम् उद्दिश्य बलिं प्रददौ। तत ईश्वरो रजन्याम् २
इस्रायेले दर्शनं दत्त्वा कथितवान्, हे याकूब् हे
याकूब्, ततः स उक्तवान्, अहमत्रास्मि। तदा स ३
कथितवान्, अहमीश्वर तव पितुरीश्वरः, त्वं मिसरं
गन्तुं मा भैषीः, तत्राहं त्वां एकां महाजातिं करि-
ष्यामि। अहमपि त्वया सार्द्धं मिसरं गमिष्यामि; ततः ४
परं त्वां पुनरवश्यं परावर्त्तयिष्यामि, यूषफ् निज-
कराभ्यां तव नेत्रे निमीलयिष्यति।

अनन्तरं याकूब् बेर्शेबातो यात्रायां कृतायां इस्रा- ५
येलं वोढुं फिरौणा प्रहितेषु शकटेषु तेषां पुत्राः निज-
पितरं याकूबं बालकान् योषितश्च निन्युः। ततः परं ६

ते स्वीयपशून् किनान्देशोपार्जिताः सकलसम्पत्तीश्च गृह्णन्तो याकूबा सार्द्धं सवंशा मिसर्देशम् उपस्थितवन्तः।

७ इत्थं याकूब् सुतान् सुताः पौत्रान् पौत्रीः सकलपरिवारान् मिसर्देशं निनाय।

८ मिसरमागतेस्रायेलो वंशस्य अर्थात् याकूबस्तस्य सन्तानानां नामानि। याकूबो ज्येष्ठपुत्रो रूबेन्।

९ रूबेनः सुता हनोक् पलुः हिष्रोन् कर्मिश्च।

१० शिमियोनः सुता यिमूयेल् यामीन् ओहद् याखीन् सोहर् तथा किनानीयजायाया जातः सुतश्च शौल्।

११ लेवेः सुता गेर्शोन् किहात् मिरारिश्च।

१२ यिहूदाः सुत एर् ओनन् शेलाः पेरस् सेरहश्च।
किन्तु एरओननौ किनान्देशे मम्रतुः।
पेरसः सुता हिष्रोन् हामूल् च।

१३ इषाखरः सुता तोलय् पूय् योव् शिम्रोन् च।

१४ सिबूलनः सुता सेरद् एलोन् यह्लेल् च।

१५ दीणा कन्या सहितः पद्नरामि याकूबो जात एष लेयाया वंशः। इमे सुतैः सुताभिश्च त्रयस्त्रिंशत् जना आसन्।

१६ गादः सुताः सिफोन् हगि शूनी इषबोन् एरिः अरोदी अरेली च।

आशेरः सुता यिम्ना यिश्वा यिश्वि विरिय तेषां १७
भगिनी सेरहश्च ; विरियः सुता हेवर् मल्कीयेल् च।
लावन् निजकन्यालेयायै यां सिल्पानामिकां दासीं १८
दत्तवान्, तस्या उदरात् याकूबा जाता इमे षोडश
प्राणिनः।
याकूबो जायाराहेलः सुता यूषफ् विन्यामीन् च। १९
मिसरदेशे ओन्नगरस्य पोटीफेरो याजकस्य २०
आसिनत्नामिकायाः कन्याया गर्भे यूषफो जातौ
मिनशिरिफ्रायिम् च।
विन्यामीनः सुता वेला वेखर् अस्बेल् गेरा २१
नामन् एही रोश् मुप्पीम् हुप्पीम् अर्द् च। एते चतुर्दश २२
जना याकूब औरसा राहेलो वंशाः।
दानः सुतो हूशीम्। २३
नप्तालेः पुत्रा यहसियेल् गूनि येत्सेर् शिल्लेम् च। २४
लावन् निजकन्यायै राहेलै यां विल्हानामिकां दासीं २५
दत्तवान्, तस्या गर्भे याकूबो जाता एते सप्त जनाः।
पुत्रवधूः विहाय याकूब औरसाः सन्तानाः षट्षष्टि २६
जनास्तेन सार्द्धं मिसरदेशं जग्मुः। तद्भिन्नाभ्यां यूषफो २७
मिसरि जाताभ्यां द्वाभ्यां पुत्राभ्यां सह मिसरं गता
याकूबः परिजनाः साकल्यतः सप्तति जना आसन्।

२८ अनन्तरं याकूब् गोशनप्रदेशे यूषफं साक्षात् कर्त्तुं
२९ तस्य समीपं स्वाग्रे यिहूदां प्राहिणोत्। तदानीं तेषु
गोशन्प्रदेशं उत्तीर्णवत्सु, यूषफ् निजरथं सज्जयित्वा
गोशन्प्रदेशे निजपितरम् इस्रायेलं साक्षात् कर्त्तुं
जगाम; ततस्तस्य सन्निधिम् उपस्थितस्य तस्य पिता
३० तस्य कण्ठे धृत्वा बहुक्षणं ररोद। तदा इस्रायेल् यूषफे
कथयामास, त्वम् अद्ययावत् जीवन् असि, त्वदीयं
मुखमहं दृष्टवान्, इदानीं स्वच्छन्दं मरिष्यामि।
३१ अनन्तरं यूषफ् निजसहजान् पितुः परिवारांश्च बभाषे
अहं गत्वा फिरौणे वार्त्तां दत्त्वा कथयिष्यामि, किनान्-
देशात् मम सहजाः पितुः सर्व्वे परिजनाश्च मम समी-
३२ पम् आगच्छन्। ते पशुपालकाः पशुवाणिज्यकाश्च
तस्मात् ते निजगोमेषादिव्रजादि सर्व्वस्वम् आनयन्।
३३ ततः फिरौण् युष्मान् आहूय युष्माकं का वृत्तिरिति
३४ यदि पृच्छति, तर्हि तवैते दासेया आ यौवनात् अद्य
यावत् पुरुषपरम्परातः पशुपालनवृत्तिका इति वाचं
कथयिष्यथ; तेन यूयं गोशनप्रदेशे वस्तुं प्राप्स्यथ, यतः
सर्व्वे पशुपालका मिस्रीयाणां घृणास्पदं भवन्ति।

## ४७ सप्तचत्वारिंशोऽध्यायः।

१ यूषफः पितृपञ्चभ्रातॄणां फिरौणः साक्षात्कारणं ११ प्रजा-
हते लोकानां रौप्यपश्वादिभ्यो भूम्यादानं १९ प्रजानां
पञ्चमांशाय बीजदानं २८ याकूबे यूषफशीकरणञ्च।

अनन्तरं यूषफ् गत्वा फिरौणे वार्त्तां दत्त्वा कथ- १
यामास, मम जनक: सहजाश्च किनान्देशात् निज-
गोमेषादीनां प्रजाम् तदन्यसर्व्वसम्पदादाय समागताः
इदानीं ते गोशनप्रदेशे सन्ति। ततो यूषफ् निजान् २
पञ्च सहजान् नीत्वा फिरौणं साक्षात् कारयामास;
तदा फिरौण् यूषफो भ्रातॄन् पप्रच्छ, युष्माकं का वृत्ति? ३
ते फिरौणं प्रत्यवदन्; भवत एते दासेया पूर्व्वपुरुष-
परम्परया पशुपालकाः। ते फिरौणं पुनरूचुः, वयम- ४
स्मिन् देशे प्रवस्तुम् आगमाम, यत: किनान्देशे महा-
दुर्भिक्षोऽभवत्, तस्मात् तवैतद्दासेयानां पशुगणचारण-
स्थानं न भवति; ततो निवेदयामो भवतो दासेयान्
गोशन्प्रदेशे वासयतु। तत: फिरौण् यूषफम् आज्ञा- ५
पयामास, तव जनक: सहजाश्च तव समीपम् आगमन्।
मिसर्देशस्तव सम्मुखे विद्यते, देशस्योत्तमस्थाने निज- ६
जनकसहजान् वासय; तेभ्यो गोशन्प्रदेशे स्थानं देहि,
तेषां मध्ये यं यं कर्मयोग्यं बुध्यसे, तान् मदीयपशु-
प्रजानाम् आधिपत्यपदे नियोजय। अनन्तरं यूषफ् ७

निजजनकम् आनीय फिरौणं साक्षात् कारयामास।
८ याकूब् फिरौणं आशिषं जगाद। तदानीं फिरौण्
याकूबं पप्रच्छ, तव वयः कति वत्सरा अभवन्?
९ याकूब् फिरौणं जगाद, मम प्रवासकालाः त्रिंशदधिक-
शतं वत्सरा अभवन्; मदीयायुरल्पं क्लेशजनकञ्च मदीय-
१० पूर्ब्बपुरुषाणां प्रवासकालस्यायुषो समं नहि। अनन्तरं
याकूब् फिरौणमाशिषं गदित्वा तस्य साक्षात् बहिष्टो
११ ऽभवत्। तदानीं यूषफ् फिरौण आज्ञानुसारेण मिस-
र्देशस्य मध्ये रामिषेषनामके उत्तमस्थाने ऽधिकारं
१२ दत्त्वा निजपितरं सहजांश्च स्थापयामास। अपरं
यूषफ् निजजनकं सहजान् पितुः परिजनांश्च परि-
वारानुसारतो भक्ष्यवस्तूनि दत्त्वा प्रतिपालयामास।
१३ अनन्तरं सर्व्वस्मिन् देशेऽतिशयकठिनदुर्भिक्षस्य
जातत्वात् खाद्यवस्तूनां तादृशोऽभावो जातो येन
मिसर्देशीयाः किनान्देशीयाश्च जना मूर्च्छागतदेहा
१४ अभवन्। अपरं लोका यूषफः समीपे यानि शस्यानि
क्रीतवन्तः तेषां मूल्यार्थं यूषफ् मिसर्देशस्य किनान्-
देशस्य निःशेषरौप्याणि संगृह्य फिरौणो गृहम् आनी-
१५ तवान्। इत्थं मिसर्देशे किनान्देशे च रूप्याभावे सति
मिस्रीयलोका यूषफो निकटम् आगत्य जगदुः, अस्मभ्यं

खाद्यं देहि, अस्माकं रूप्याणां शेषत्वात् वयं किं तव
सम्मुखे मरिष्यामः। ततो यूषफ् कथितवान्, यदि १६
युष्माकं रूप्याणां शेषोऽभवत् तर्हि पशून् दत्त, पशुकृते
युष्मभ्यं भक्ष्यं दास्यामि। तदानीं तैः यूषफः समीपं १७
निजनिजपश्वानीतेषु यूषफ् वाजिमेषअजगोअज-
गर्दभादीनां विनिमयतस्तेभ्यः भक्ष्याणि दातुम् आरभत;
इत्थं यूषफ् तेषां पशून् गृहीत्वा तस्मिन् वत्सरे तेभ्यः
खाद्यानि दत्तवान्। अपरं वत्सरे सम्पूर्णे द्वितीयवत्सरे १८
ते यूषफः समीपम् आगत्य बभाषिरे, अस्माभिः सर्व्वाणि
रूप्याणि व्ययितानि, तत् प्रभुतो न गोपायिष्यते;
अस्माकञ्च ये पशुव्रजा आसन्, ते प्रभोरेवाभवन्;
अस्माकं कायान् भूमीश्च विना प्रभोः साक्षात्
किमपि न विद्यते। अतो वयम् अस्माकं भूमयश्च एते १९
उभे तव गोचरे कुतो विनंक्ष्यतः। वयं येन न मृत्वा
जीवन्तस्तिष्ठाम, अस्माकं भूम्यश्च पतिता न भवन्ति,
तत्कृते बीजानि देहि, खाद्यभक्ष्याणि दत्वा अस्मान्
अस्माकं सर्व्वा भूमीश्च क्रीत्वा गृहाण; ततो वयं
स्वस्वभूम्या सार्द्धं फिरौणोऽधीना भविष्यामः। अन- २०
न्तरं दुर्भिक्षे तेषाम् अतीवासह्ये सति मिस्रियाः स्वस्वा
भूमी व्यक्रीणन्; ततो यूषफ् फिरौणः कृते मिस्रीयाणां

सर्व्वा भूमीः क्रीतवान्; इत्थं सर्व्वासु भूमिषु फिरौणो
२१ ऽधिकारो जातः। ततो स मिसर एकसीमातोऽन्य-
सीमां यावत् नगरे नगरे लोकान् स्थानान्तरी चकार।
२२ केवलं याजकानां भूमी र्न व्यक्रीनत्, यतः फिरौन्
तेभ्यस्ता वृत्तित्वेन दत्तवान्, तस्मात् तेषां भूमौ न
विक्रीतायां फिरौणा दत्ता या वृत्तिः सा तेषां भोगा-
र्थमेव स्थितवती।
२३ अनन्तरं यूषफ् प्रजाभ्यः कथयामास, पश्यताहं फि-
२४ रौणः कृते युष्माकं सर्व्वा भूमीश्च क्रीतवान्। इदानीं
एतानि वीजानि गृहीत्वा भूमौ वपत; तत्र यद्यत् उत्प-
त्स्यते तस्य पञ्चमांशं फिरौणे दास्यथ, तदन्यचतुरो-
ऽंशान् भूमेर्वीजकृते निजपरिजनानां बालकानाञ्च
२५ खाद्यकृते स्थापयिष्यथ। ततस्ते प्रत्यूचुः, भवान् अस्माकं
प्राणान् रक्षितवान्; भवतः कृपादृष्टौ सत्यां वयं फि-
२६ रौणो दासेया भविष्यामः। अपरं याजकानां यस्यां
भूमौ फिरौणो नाधिकारो जातस्तदितरासां सर्व्वासां
भूमीनां पञ्चमांशं फिरौन् प्राप्स्यति, यूषफा स्थापि-
तैषा व्यवस्था सर्व्वमिसरदेशेऽद्य यावत् वर्त्तते।
१७ अपरम् इस्रायेल् मिसरो गोशन्प्रदेशे न्युवास, तत्र
चाधिकारं प्राप्य क्रमशो वर्द्धिष्णुरतिवृद्धवंशो बभूव।

स याकूब् मिसर्देशे सप्त दश वत्सरान् यापयामास, तदा २८
तस्य वयः सप्तचत्वारिंशदधिकशतं वत्सरा बभूवः। अथ २९
इस्रायेल् निजं मरणदिनं सविधं विज्ञाय निजसुतं
यूषफं समाहूय गदितवान्, अहं यदि तव साक्षात्
अनुगृहीतोऽभवं, तर्हि विनये मिसर्देशे श्मशाने मां न ३०
निधाय मम पूर्व्वपुरुषाणां समीपे मां श्मशाने निधा-
तुम् एतस्मात् मिसर्देशात् नीत्वा तेषां श्मशानवेश्मनां
समीपे मां स्थापयिष्यसि, मां प्रतीमम् अनुग्रहं सत्यतया
व्यवहरिष्यसीति मम जंघाधो हस्तं दत्त्वाङ्गीकुरु;
ततो यूषफ् कथयामास, त्वदीयाज्ञानुसारेणैव करि-
ष्यामि। तथापि शपथं कर्त्तुं यूषफि याकूबा भाषिते ३१
यूषफ् तस्य समीपे शपथं चकार, तदानीम् इस्रायेल्
शय्याया शिरःस्थानदिशि प्रणनाम।

## ४८ अष्टचत्वारिंशोऽध्यायः।

१ यूषफस्य सुतयोश्च पीडितस्य याकूबः साक्षात् आनयनं तान् प्रति याकूबः कथनं ८ यूषफः सुतद्वयायाशीषं दत्त्वा कनिष्ठस्य प्रधानत्वकरणं १५ यूषफायाशीर्वचनं तस्य मंगलवचनञ्च।

एतासु घटनासु गतासु, पश्य तव पिता पीडितो १
ऽभवत्, इति वार्त्ता यूषफे कथिता; ततः स निजौ
द्वौ सुतौ मिनशीफ्रयिमौ च नीत्वा जगाम। तदानीं २
कश्चित् याकूबे कथितवान्, पश्य तव सुतो यूषफ् १

२ आगमत् तत इस्रायेल् आत्मानं सबलं कृत्वा उच्चिष्ठन्
उपविवेश, अपरं यूषफं कथयामास, किनान्देशस्य
लूस्नगरे सर्व्वशक्तिमान् ईश्वरो मां दर्शनं दत्त्वा दृत्या-
४ शिषं गदित्वा कथयामास ; पश्य त्वामहं फलवन्तं बहु-
वंशं करिष्यामि, त्वत्तो जनानिवह उत्पत्स्यते, तव
भाविवंशाय चिरमाधिकर्त्तुम् इमं देशं दास्यामि च।
५ अतो मम मिसरागमनात् पूर्व्वं मिसरदेशे इफ्रयिम्
मनःशिनामानौ तव यौ द्वौ पुत्रौ जातौ, तौ मम भवि-
६ ष्यतः, रूबेण् शिमियोनाविव मम भविष्यतः। किन्त्वतः
परं तव ये ये सन्ताना भविष्यन्ति, ते तव भविष्यन्ति ;
अपरं ज्येष्ठभ्रात्रोर्णां नाम्ना स्वस्वाधिकारे विख्यास्यन्ति।
७ यतः पद्दनरामागमनकाले किनान्देशस्य इफ्रा-
थातः किञ्चिद् दूरे तिष्ठति मयि राहेल् मार्गएव
मम समीपे मृता; ततोऽहम् इफ्राथा अर्थात् बैत्लेहमः
पदवीपार्श्वे तस्याः श्मशानस्थानं कृतवान्।
८ अनन्तरम् इस्रायेल् यूषफः पुत्रौ विलोक्य पप्रच्छ,
एतौ कौ? ततो यूषफ् पितरं जगाद, ईश्वर एतस्मिन्
९ देशे मह्यं पुत्रावेतौ दत्तवान्। तदानीम् इस्रायेल्
कथितवान्, अहं विनये, एतौ मम समीपम् आनय,
१० तावहम् आशिषं ददामि। किन्तु वार्द्धक्यकारणात्

क्षीणदृष्टिरिस्रायेल् सुस्पष्टं द्रष्टुं न शशाक; ततो यूषफ्
तस्य समीपं तावानीतवान्, स तौ चुम्बितवान्, आलि-
ङ्गितवांश्च। अपरं इस्रायेल् यूषफं बभाषे, अहं विनि- ११
तवान्, तव वदनं पुनर्द्रष्टुं न प्राप्स्यामि, किन्तु पश्य, तव
वंशमपीश्वरो माम् अदर्शयत्। तदा यूषफ् जानुद्वय- १२
मध्यात् तौ नीत्वा भूमिष्ठः सन् प्रणनाम। पश्चात् यूषफ् १३
तौ द्वौ पितुः समीपं नीत्वा निजदक्षिणकरेण इस्रायेलो
वामे इफ्रायिमं, वामकरेण इस्रायेलो दक्षिणे मिनशिं
धृत्वा स्थापितवान्। तत इस्रायेल् विविच्य दक्षिणकरं १४
प्रसार्य्य कनिष्ठस्य इफ्रायिमो मस्तकोपरि दत्तवान्,
ज्येष्ठस्य मिनशेर्मस्तकोपरि च वामं करं दत्तवान्।

अनन्तरं यूषफम् आशिषं निगद्य भाषितवान्, मम १५
पूर्व्वपुरुषौ इब्राहीमिस्हाकौ यस्य पन्थानम् अव-
लम्बितवन्तौ यश्चेश्वरोऽद्य यावत् मां यावज्जीवनं प्रति-
पालितवान्; यश्च दूतः सर्व्वापद्भ्यो मां रक्षितवान्, १६
स एतौ बालकौ आशिषं ब्रूयात्; आभ्यां मम नाम
मदीयपूर्व्वपुरुषयोः इब्राहीम् इस्हाकोश्च नाम तिष्ठतु,
एतौ देशे बहुवंशौ भवताम्। तदानीं इफ्रायिमः शिरसि १७
पितुर्दक्षिणं हस्तं दृष्ट्वा यूषफ् असन्तुष्टोऽभवत्, तत
इफ्रायिमो मस्तकात् मिनशेः शिरसि तं स्थापयितुं

जनकस्य करं उत्थाप्य जगाद, हे तात, इत्थं नहि, एष
१८ ज्येष्ठ एतस्य शिरसि दक्षिणं करं देहि। किन्तु तस्य
पिता अनङ्गीकृत्य कथितवान्, हे पुत्र, तदहं जानामि,
१९ जानाम्यहं; सोपि महती जाति र्भविष्यति, इति सत्यं,
किन्तु तस्य कनिष्ठो भ्राता तस्मादपि महती जाति
२० र्भविष्यति, एतस्य वंशो बहुजनो भविष्यति। तद्दिनं
स तावाशिषं प्रभाष्य कथयामास, इस्रायेलो वंशा
युवयो र्नाम्ना सादृश्यं दत्वा एताम् आशिषं वदिष्यति,
ईश्वरस्त्वाम् इफ्रयिमो मिनशिव तुल्यं करोतु, इत्थं स
२१ मिनशेरिफ्रयिमम् अग्रगण्यं कृतवान्। अपरम् इस्रा-
येल् यूषफं कथयामास, पश्य मम मृत्युकाल उपस्थित-
वान्; किन्तु ईश्वरो युष्माकं सहायो भूत्वा युष्मान् पुनः
२२ पैतृकं देशं नेष्यति, अहं यमंशं निजासिधनुषो र्बलात्
इमोरीयाणां करात् प्राप्तवान्; तव भ्रातृगणात् तम-
धिकमंशं तुभ्यम् अदाम्।

## ४९ ऊनपञ्चाशत्तमोऽध्यायः।

१ याकूबः सर्वेषां पुत्राणामाह्वानं कृत्वा तेषां २ एकैकमधि तस्य कथनं भविष्यद्वाक्यञ्च २९ निजश्मशानस्थानमाज्ञापनञ्च।

१ अनन्तरं याकूब् निजपुत्रान् आहूय कथयामास।
यूयं मिलत हे पुत्रा यद् युष्मान् प्रति घटतः।

२ घटिष्यते तदेवाहं युष्मभ्यं कथयामि हि ।
हे याकूबः सुता यूयं निशामयत मद्वचः ।
पित्रिस्रायेल्कथायां वः स्वमनांसि निधत्त च ॥
३ रूवेन् ज्येष्ठसुतस्त्वं मे सामर्थ्यं प्रथमं बलं ।
पराक्रमेण मुख्योऽसि महिम्ना त्वं निजेन च ।
४ त्वं स्रोतइव वेगी हि न स्याता मुख्यता तव ।
यतस्त्वं निजतातस्य शयनीयं गतः पुरा ।
गत्वा च शयनीयं मे तदशुद्धं कृतं त्वया ॥
५ शिमियोनाख्यो लेविश्च विद्येते सहजावुभौ ।
भवतो निर्दये अस्त्रे तयो र्द्वौ चन्द्रहासकौ ।
६ तयो र्गूढपरामर्शे मन्मनो न प्रवर्त्ततां ।
समज्यायां तयो र्नो मे सम्मानमुपतिष्ठतु ।
अहन्यत पुरा ताभ्यां नर एकः स्वकोपतः ।
एकश्च भूपतिस्ताभ्याम् अनाश्यत निजेच्छया ।
७ तयोः क्रोधोऽभिशप्येत यतः स उग्रितोऽभवत् ।
तयोः कोपोऽभिशप्येत यतः स निष्ठुरोऽभवत् ।
याकूबीयजनादेतौ करिष्यामि पृथक् पृथक् ।
इस्रायेलीयमध्यात्तौ विकरिष्यामि निश्चितं ॥
८ यिहूदाः सहजास्ते त्वां प्रशंसिष्यन्ति सर्व्वशः ।
भविष्यन्ति त्वदीयाश्च रिपवस्तव हस्तगाः ।

त्वदीयपिल्लयन्त्राणाश्च्वां प्रणंस्यन्ति दृषद्वत्।
९ सिंहानां शावकैस्तुल्यो शिलदा भवति स्वयं।
हे वत्स मृगयाद्रव्यं भुक्त्वोड्डुं त्वं गमिष्यसि।
सिंहीवत् सिंहवत्सा त्वां सुप्तं को बोधयिष्यति।
१० शीलोः शान्तयिता यावद् आगमं न करिष्यति।
नहि तावद् शिलदातो राजदण्डो गमिष्यति।
चिराधिपतिता तस्य वंशात्नापगमिष्यति।
तत्समीपे च लोकानां भविष्यति हि संचयः।
११ द्राक्षालतासमीपे स गर्द्दभं भन्त्स्यति स्वयं।
सुगोस्तनीसमीपे च बद्धा गर्द्दभशावकान्।
रञ्जयिष्यति गोस्तन्या रसेन चोत्तरीयकं।
द्राक्षारक्तस्यै रक्तं परिधेयं करिष्यति।
द्राक्षारसेन तस्यापि नेत्रे रक्ते भविष्यतः।
१२ शुक्लास्तस्य भविष्यन्ति दुग्धेन सकला रदाः॥
१३　सरित्पतेः प्रतीरे हि सिद्धून् संनिवत्स्यति।
पोतीयाश्रिकटे तस्य निवासश्च भविष्यति।
तस्याधिकारसीमा च सीदोनन्ता भविष्यति॥
१४　आवासमध्यतः शायी बलवानपि यो भवेत्।
गर्द्दभस्तेन सदृशः इषाखर् संभविष्यति।
१५ विश्राममुत्तमं बुद्धा रम्यं बुद्धा च भूतलं।

भारं वोढुं नमन् स्कन्धं करं राज्ञः स दास्यति॥

१६ इस्रायेलोऽन्यवंशानां सदृशं गतोऽपि दान्।

स्वकीयानां मनुष्याणां सुविचारं करिष्यति।

१७ पथि संस्थाय यः सर्पो दष्ट्वा च वाजिनः पदं।

तदारूढं पातयेच्च तत्तुल्यो दान् भविष्यति॥

१८ परेश त्वत्परित्राणं समवेक्ष्य स्थितोऽस्म्यहं॥

१९ कश्चित् सैन्यसमूहश्चेत् गादं जयति कर्हिचित्।

तर्हि गादपि तत्सैन्यं पराजेष्यति निश्चितं॥

२० आशेर उत्तमं खाद्यं तस्मात् राजापि भोक्ष्यते॥

२१ मनोहरप्रशाखाभिः कुरङ्गो योऽस्ति सुन्दरः।

रूपेण तेन सदृशो नप्तालिः संभविष्यति॥

२२ यूषफ् प्ररोहः समीपस्था प्राचीरपारगामिनी।

फलयुक्ता च या शाखा तद्युक्तश्चास्ति नः समः।

२३ चापधृद्भिरवज्ञात आविद्धश्च शिलीमुखैः।

अतिक्लिष्टः स तेनास्याभवद्गाढं शरासनं।

२४ तदीयदोः करौ चाशु तेनाभूद्बलवत्तता।

इस्रायेलोऽविता यस्य मूलपाषाणरूपकः।

२५ ईश्वरो यस्य याकूबो विद्यते सर्वशक्तिमान्।

स्वर्गातेश्वरदाक्षिण्यात् स्तन्यगर्भाभिपक्षया।

ऊर्द्ध्वस्थादिपतो यच्च कुशलं परिजायते।

अधोगम्भीरनीराब्धेः कुशलं यच्च जायते ।
मङ्गलं जायते यच्च गर्भान्तस्य पयोधरात् ।
त्वदीयानि भविष्यन्ति तानि सर्व्वाणि निश्चितं ।
२६ त्वत्पितुः फलदाशीः स्यान्मदादिपुरुषाशिषः ।
सा चिरस्थायिशैलीयां सीमां यावत् समेधिता ।
भ्रातापसारितस्यैव यूषफोमस्तकोपरि ।
भ्रातिषाकुलमध्याच्च सुतरां संभविष्यति ॥

२७ प्रगे संधृतभक्ष्यांशो सन्ध्याखेटान्नवण्टकः ।
वोवृकस्तेन सद्भागी विन्यामीन् संभविष्यति ॥

२८ एत इस्रायेलो द्वादश वंशा, एषां जनक आशि-
र्व्वदनकाले कथामिमां कथयित्वा एतेषाम् एकैकं
विशेषं आशिषं जगाद ।

२९ अनन्तरं याकुब् तान् अवदत्, अहं निजजनैः सार्द्धं
३० संगृहीतो भविष्यामि । यत इब्राहीम् श्मशानाधि-
कर्त्तुं किनान्देशे मम्ब्याः पर्व्वतस्थितं मक्पेलाया यत्
क्षेत्रं हेतीय इफ्रोणः क्रीतवान्, यत्र स्थान इब्रा-
३१ हीमस्तस्य जायायाः सारायाश्च इस्हाकस्तस्य भार्य्याया
रिव्काचायाश्च श्मशानम् अभवत्, यत्र चाहं लेयायाः
श्मशानम् अकरवं, तत्रैव हेतीय इफ्रोणः क्षेत्रस्थितायां
गुहायां पितृलोकानां समीपे मम श्मशानं करिष्यथ ।

यतस्तत् क्षेत्रं तन्मध्यस्था गुहा च हेतीय सन्तानेभ्यो- ३२
ऽक्रीणात्। इत्थं स निजसुतान् प्रत्याज्ञापनं समाप्य ३३
शयनीये द्वौ पादौ मेलयित्वा प्राणान् त्यक्त्वा निज-
जनानां समीपे समगच्छत।

## ५० पञ्चाशत्तमोऽध्यायः।

१ याकूबः कृते शोचनं ७ याकूबः श्मशानगमनं १५ यूषफो भ्रातृणां सान्त्वनं २२ यूषफो वंशस्य कथनं शेषाज्ञा मरणञ्च।

तदानीं यूषफ् निजपितरं क्रोडे कृत्वा रोदित्वा १
चुचुम्ब। अपरं यूषफ् स्वपितृदेहं सुगन्धिद्रव्ययुक्तं कर्त्तुं २
निजभृत्यचिकित्सकान् आज्ञापयामास; ततश्चिकि-
त्सका इस्रायेलो वपुः सुगन्धिद्रव्यै र्योजयामासुः। किन्तु ३
तत्कर्मकरणे चत्वारिंशद्दिनेषु गतेषु ते तत्र चत्वारिं-
शत् दिनानि यापयामासुः, मिस्रीयलोकाश्च तत्कृते
सप्ततिदिनानि यावत् शुशुचुः। शोकीयदिनेषु गतेषु ४
यूषफ् फिरौणः परिजनान् अवदत्, यदि मां प्रति यु-
ष्माकम् अनुग्रहम् अस्ति, तर्हि फिरौणः कर्णगोचरे कथा-
मेतां कथयत। मम पिता मां शपथं कारयित्वा गदित- ५
वान्, पश्य मयि मृते किनानदेशे स्वस्य कृते यत् श्मशानं
खातवान् तत्र मां त्वं निधास्यसि; तस्मात् इदानीं मां
यातुम् आज्ञापयतु; पितरं श्मशाने निधायाहं पुनरा-

६ गमिष्यामि । ततः फिरौण् उक्तवान्, याहि, तव पिता
त्वां यथा शपथं कारितवान् तथैव त्वं तं श्मशाने
स्थापय ।

७ तदा यूषफ् स्वपितरं श्मशाने निधातुं यात्रां
चकार ; ततो फिरौणो भृत्याः तस्य गेहस्याधिप-
८ तयो मिसर् देशीयाधिपतयः यूषफः सर्व्वे परिवाराः
तस्य भ्रातरः तस्य पितुर्गृहस्य परिवाराश्च तेन सार्द्धं
जग्मुः ; गोशन् प्रदेशे केवलं तेषां बालका मेषपालका
९ गोपालकाश्च स्थितवन्तः । तेन सार्द्धं रथारूढा अश्वा-
१० रूढाश्च जग्मुः ; तेनातीव जनसमागमो बभूव । पश्चात्
ते यर्द्दन्नतटिन्याः पारस्थितम् आटद्शस्यमर्द्दनस्था-
नम् उपस्थाय तत्र महारवेण रुरुदुः ; यूषफो तत्र
११ स्थाने सप्त दिनानि यावत् शुशुचे । अतः किनान्-
देशीया आटद्शस्यमर्द्दनस्थाने तेषाम् ईदृक् शोकं
विलोक्य कथयामासुः ; मिस्रीयाणाम् अयं महान्
शोकः । तस्मात् यर्द्दन् पारस्थं तत् स्थानम् आबेल् मि-
सर् (मिस्रीयाणां शोकः) इति नाम्ना विख्यातो बभूव ।
१२ अनन्तरं याकूब निजपुत्रान् यथाज्ञापयत्, तस्य पुत्रा-
१३ स्तदनुसारेण कर्म्म चक्रुः । फलतस्तस्य पुत्रास्तं किनान्-
देशं नीत्वा हेतीय इफ्रोणः श्मशानस्थानार्थम् इमाञ्चीमा

क्रीता मक्ष्याः पूर्व्वस्यामकपेलावेत्रस्य या गुहा तन्मध्ये
तस्य श्मशानं कृतवन्तः। तस्य तातस्य श्मशाने जाते १४
यूषफ् तस्य पितुः श्मशानं कर्त्तुम् आगता भ्रातरः सङ्गि-
नश्च मिसर्द्देशं प्रत्यागतवन्तः।

अपरं स्वेषां पिता मृत इति दृष्ट्वा यूषफो भ्रातरः १५
कथयामासुः, यदि यूषफ् अस्मान् ऋतीयते तर्हि
वयं तस्य यद्यत् अहितम् अकुर्म्म तत्प्रतिफलम् अस्मभ्यं
दास्यति। तस्मात् ते यूषफं प्रति कथामेतां लोकद्वारा १६
कथयामासुः ; तव पिता मरणात् पूर्व्वं अस्मान् इति
गदितवान्। यूषफे कथामेतां कथयिष्यथ, तव भ्रातृभि- १७
स्त्वां प्रति दोषे कृतेपि त्वम् अनुगृह्य तेषां दोषम्
अपराधञ्च मार्ज्जयसि; अतो वयम् इदानीं प्रार्थयामहे,
तव पितुरीश्वरस्य दासेयानां दोषं क्षमस्व, किन्तु यूषफ्
तेषां कथामेतां श्रुत्वा रोदितुम् आरभत। अनन्तरं १८
तस्य भ्रातरस्तदग्रे गत्वा प्रणिपत्य कथयामासुः, पश्य,
वयं तव दासाः। ततो यूषफ् तेभ्यः कथितवान्, यूयं १९
मा भैष्ट, किमहम् ईश्वरस्य प्रतिनिधिस्वरूपः? यूयं
मद्विरुद्धं कुमन्त्रणां कृतवन्तः इति सत्यं, किन्त्वीश्वर- २०
स्तामेव सुमन्त्रणां कृतवान्, फलत इदानीं यादृशं पश्यथ,
तथैव च बहूनां मनुष्याणां प्राणान् अरक्षत्। अतो २१

यूयं इदानीं मा भैष्ट युष्मान् युष्माकं बालकांश्च
प्रतिपालयिष्येऽहम्। इत्थं मधुरवाक्यं कथयित्वा तान्
सान्त्वयामास।
२२ अनन्तरं यूषफ् तस्य पितुः परिवाराश्च मिसरदेशे
२३ वसन्तः तस्थुः। अपरं यूषफ् दशाधिकं शतं वत्सरान्
जीवन् इफ्रयिमः पौत्रं यावत् ददर्श, स मिनशेः माखी-
२४ रीयः पुत्रस्य सन्तानानपि क्रोडे चकार। ततो यूषफ्
सहजान् अवदत्, अहं मुमूर्षुः, किन्त्वीश्वरो युष्मान् प्रति
नितान्तं दृष्टिं कृत्वा इब्राहीम इस्हाको याकूबश्च
समीपे यं देशं दातुं शपथं कृतवान् अस्मात् देशात् तं
२५ देशं नेष्यति। ततो यूषफ् इमं शपथं कारयित्वा इस्रा-
येलः सन्तानान् बभाषे, ईश्वरो युष्मान् प्रत्यवश्यं दृष्टिं
करिष्यति, तदानीञ्च यूयं एतस्मात् स्थानात् मदीयान्य-
२६ स्थीनि नेष्यथ। इत्थं यूषफ् दशाधिकशतवत्सरवयसि
ममार, ततस्ते तं सुगन्धिद्रव्ययुक्तं कृत्वा मिसरदेशे काष्ठा-
धारे स्थापयामासुः।

इत्यादिपुस्तकं समाप्तम्।

---